भावादित्युच्यते तदा विशेषणत्वमात्रप्रयोजकप्रथमान्ततत्तत्पदानुपस्थाप्यत्वं बोध्यम् । न विशेषणत्वे तात्पर्यं, न विशेषणत्वमात्रे तात्पर्यम् । तथा च तण्डुलं पचतीत्यादौ यदि विशेषणत्वमुख्यविशेष्यत्वाभ्यां तण्डुलबोधे तात्पर्यं तत्र तण्डुले सङ्ख्यान्वयवारणाय प्रथमान्तेत्यादीति भावः । इदमुपलक्षण-

---

म् । तात्पर्याऽसत्त्वे ऽपि भ्रमात्मकतात्पर्यज्ञानसम्भवेन शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुत्वे ऽपि चैत्रे सङ्ख्यान्वयापत्तिर्द्रष्टव्या । तदेत्यादिविशेषणत्वमात्रप्रयोजकं यच्चैत्र इवेत्यादौ प्रथमान्तचैत्रपदं तदनुपस्थाप्यत्वमेवाऽविशेषणत्वपदेनात्र विवक्षितम्।तथा च चैत्र इवेत्यत्र प्रथमान्तचैत्रपदस्य इवार्थे विशेषणमात्रप्रयोजकतया तदुपस्थाप्यत्वेन न तत्र सङ्ख्यान्वयः। चैत्र एव पचतीत्यादौ चैत्रे सङ्ख्यान्वयोपपत्तये मात्रपदम्। मुख्यविशेष्यत्वाऽप्रयोजकत्वे सति विशेषणत्वप्रयोजकत्वं विशेषणत्वमात्रप्रयोजकत्वम् । यद्यपि चैत्र इवेत्यादावपि चैत्रपदजन्यपदार्थस्मरणे चैत्रो मुख्यविशेष्यतयैव भासतइति तस्यापि विशेषणत्वमात्रप्रयोजकत्वं तथापि शाब्दबोधनिरूपितविशेषणत्वमात्रप्रयोजकत्वमिह विवक्षितमिति न को ऽपि दोषः । न चात्र प्रथमान्तेति व्यर्थम् इति वाच्यम् । चैत्रः चैत्रं पश्यतीत्यत्र द्वितीयान्तचैत्रपदस्य विशेषणत्वमात्रप्रयोजकतया तदुपस्थाप्यत्वस्य चैत्रे सत्त्वेन तत्र सङ्ख्यान्वयोपपत्तये तदुपादानावश्यकत्वात् । न चैवमपि चैत्रः पचति चैत्र इव मैत्रः सुन्दर इति वाक्यद्वयजन्यसमूहालम्बनशाब्दबोधः , तत्र चैत्रे सङ्ख्यान्वयो न स्यात् तत्र तथाविधप्रथमान्तपदोपस्थाप्यत्वस्यैव तदानीमसत्त्वादिति वाच्यम् । यत्र प्रथमान्तपदाख्यातपदाभ्यामन्वयप्रयोज्यपरस्परनिरूप्यनिरूपकभावापन्नविषयताशालिशाब्दबोधो जन्यते विशेषणतामात्रप्रयोजकतत्प्रथमान्तपदोपस्थाप्यत्वादाख्यातार्थसङ्ख्यान्वयप्रयोजकत्वोपगमादित्युक्तस्थले पचतीत्याख्यातपदचैत्रइवेत्यादिभिन्नवाक्यस्थचैत्रपदाभ्यां न तादृशशाब्दबोधो जन्यतइति न सङ्ख्यान्वयाऽनुपपत्तिः । अतस्तत्पदमपि ग्रन्थस्थं साधु सङ्गच्छतइति ध्येयम् । ननु तण्डुलं पचतीत्यत्र तण्डुलस्य कर्मत्वांशे विशेषणत्वविवक्षाभावे द्वितीयैव नोपपद्यते । कर्मत्वांशे प्रत्ययार्थस्य विशेषणत्वेन विवक्षायामेव कर्मणि द्वितीयेत्यनेन तदुत्तरद्वितीयाविधानात् । इत्थं च न विशेणतात्पर्यमूलमसङ्गतमत आह न विशेषणत्वइत्यादि ॥ विशेषणत्वमुख्यविशेष्यत्वाभ्यामित्यादि॥यत्र तण्डुलकर्मकपाकानुकूलव्यापारावांस्तण्डुल

ति । यद्वा धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः । तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम् । स्तोकं पचती-

---

म् । चैत्रेण सुप्यतइत्यादौ धात्वर्थस्वापादौ सङ्ख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्यत्वस्यावश्यकत्वात् । द्वितीयदलस्य प्रकारान्तरेण प्रयोजनं वक्तुमन्यथा प्रथमदलार्थमाह । यद्वेति । चैत्रादेर्वारणमिति । तस्य सादृश्ये वि-

---

इति शाब्दबोधे तात्पर्यं तत्र तण्डुले ऽपि संख्यान्वयवारणाय प्रथमान्तेत्यादीति भावः । ननु तण्डुलं पचतीत्यत्र यदोक्तबोधे तात्पर्यन्तदा तण्डुले ऽप्याख्यातार्थसङ्ख्यान्वये इष्टापत्तिरेवेति यदि ब्रूयात्तदास्तु । प्रथमान्तेत्यादेः प्रयोजनं दर्शयति इदमिति ॥ तथा च चैत्र इवेत्यादौ चैत्रे सङ्ख्यान्वयवारणाय कर्मत्वादीत्यादि । चैत्रेण सुप्यतइत्यादौ स्वापे तदन्वयवारणाय प्रथमान्तेत्यादीति प्रयोजनमपि साधुप्रयोगएव सम्भवतीति[1] भावः । द्वितीयदलस्येति ॥ तण्डुलं पचतीत्यत्र आख्यातार्थस्य व्यापारस्य तण्डुले विशेषणत्वे ऽन्वयतात्पर्याभावेनाऽन्वयिन्येव सङ्ख्यान्वय इति नियमात्तत्र सङ्ख्यान्वयो ऽप्यावश्यकः । एवं सङ्ख्याभिहितत्वे प्रथमा ऽप्यावश्यकी । उभयप्राप्तौ परं[2] कारकमिति नियमाद् द्वितीयापेक्षया अभिहिते कर्तुः प्रथमाया बलवत्त्वात् । तथा चैत्रः चैत्रं पश्यतीतिवत् तण्डुलः तण्डुलं पचतीति प्रयोगः साधुः । वस्तुतस्तु कर्मकर्ता तु कर्मवदिति[3] कर्मभिन्नकर्मत्वातिदेशात्कर्तुः लडात्मनेपदयोरावश्यकत्वेन पच्यते तण्डुलः स्वयमेवेत्येव प्रयोगः साधुः । साधुप्रयोगएव प्रयोजनं दर्शनीयमित्यभिप्रायेण स्तोकं पचतीत्यादौ क्रियाविशेषणे सङ्ख्यान्वयवारणं प्रथमान्तेत्यादेः प्रयोजनम् उक्तमित्यर्थः । भावनात्वं कर्तृत्वकर्मत्वान्यतरत्वम् । अपादानं सम्प्रदानं ततो ऽधिकरणं कर्मकर्तेति कारणकरणक्रमो मत इति अवधेयम् । द्वितीयान्तक्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता चेति वार्तिकेन कर्मत्वानुशासनात् क्रियाविशेषणानां कर्मद्वितीया-

---

१ सम्भवादिति १ पु० ।

२ आवश्यकी दोषानुभयप्राप्त्यै परामिति १ पु० ।

३ कर्म कर्मवदिति १ पु० ।

त्यादौ स्तोकादेर्वारणाय द्वितीयदलम्। तस्य द्वितीयान्तपदोपस्थाप्यत्वाद्वारणमिति । एवं व्यापारेपि न शक्ति-

---

शेषणत्वादिति भावः। द्वितीयान्तपदोपस्थाप्यत्वादिति । प्रथमान्तपदोपस्थाप्यत्वाभावादित्यर्थः। अत्र कल्पे चैत्र एव पचतीत्यादौ चैत्रे सङ्ख्यान्वयोपपादनं सुधीभिर्विभावनीयम्। इदं त्ववधेयम्। सङ्ख्यान्वयबोधं प्रति न स्वातन्त्र्येण प्रथमान्तपदोपस्थाप्यत्वं हेतुः, आख्यातेन भावनानवगाहिसङ्ख्यान्वयबोधस्य कुत्राप्यजननात्। सङ्ख्यान्वयबोधत्वव्यापकभावनान्वयबोधत्वावच्छिन्नहेतुभूततादृशप्रथमान्तपदोपस्थाप्यत्वरूपकारणविरहेणैव प्रथमान्तपदानुपस्थाप्ये सङ्ख्यान्वयापत्त्यसम्भवात्। न च निरुक्तप्रथमान्तपदोपस्थाप्यत्वस्य जन्यतावच्छेदकं भावनान्वयबोधत्वं वेत्यत्र विनिगमनाविरहः, सङ्ख्यान्वयमविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धतया भावनान्वयबोधत्वस्य जन्यतावच्छेदकतावच्छेदकत्वेन सङ्ख्यान्वयबोधत्वस्य तथात्वे मानाभावात्। लकारसामान्यस्य व्यापारो ऽर्थ इति मीमांस-

---

न्तत्वादिति भावः । विभावनीयमिति ॥ धात्वर्थाऽतिरिक्तविशेषणत्वमात्रेण तात्पर्याऽविषयत्वमेव कर्मत्वाद्यनवरुद्धत्वमेतत्कल्पे विवक्षणीयमिति भावः । सङ्ख्यान्वयमविषयीकृत्येति ॥ दाराः सन्तीत्यादौ नित्यबहुवचनान्तदारशब्दादपि आख्यातार्थबहुत्वसङ्ख्याया बाधितत्वादिति भावः । कर्तरीत्यादिकर्तृपदस्य भावप्रधाननिर्देशकत्वात् कर्तृत्वमेवार्थः । कर्तृत्वञ्च क्रियानुकूलकृतिमत्त्वं मुख्यं गौणञ्च क्रियानुकूलव्यापारत्वमाश्रयत्वं वा, नश्यतीत्यादौ प्रतियोगित्वमिति बोध्यम्। एवञ्चानभिहिते इत्यधिकारीयकर्तृकरणयोस्तृतीयेत्यादावपि कर्तृत्वकरणत्वयोरित्यर्थः। यत्रगतं कर्तृत्वं करणत्वं चाभिहितं तत्र प्रथमैव न द्वितीया। कर्मणि द्वितीयेति तद्विधायकसूत्राणाम् अनभिहिताधिकारस्थत्वात्प्रातिपदिकार्थस्य मुख्यविशेष्यत्वविवक्षायां सम्बोधनेथफलकारत्वात्(?)अभिहितकर्तृत्वाद्याश्रयत्वे च प्रथमाया एव विधानात् । एतेनाख्यातेन तद्गतसंख्याऽनभिधानस्यैव तद्बोधकपदोपात्ततृतीयाप्रयोजकत्वे दाराः सन्तीत्यादौ दारेषु बहुत्वस्य बाधितत्वेनाऽबोधनाद्दा-

गौरवात् रथो गच्छतीत्यादौ तु व्यापारे आश्रयत्वे वा लक्षणा जानातीत्यादौ त्वाश्रयत्वे नश्यतीत्यादौ तु प्रतियोगित्वे

---

कमतं दूषयति । गौरवादिति । जन्यत्वादिघटितस्य व्यापारत्वजात्यपेक्षया गुरुत्वादिति भावः । नन्वाख्यातस्य न यत्नार्थकत्वं रथो गच्छतीत्यादौ तदभावेऽप्याख्यातपदप्रयोगादत आह । रथ इति । रथो गच्छतीत्यत्र गमनानुकूलव्यापारस्य न बोधः किं तु गमनाश्रयत्वस्यैवेति । नवीनमतमाश्रित्याह । आश्रयत्वे वेति । लक्षणा निरूढलक्षणा । क्वचित्तथैव पाठः । चक्षुर्जानातीत्यादौ व्यापारे जनकत्वे वा लक्षणास्वीकारात् जानातीत्यादावाख्यातस्याश्रयत्वे लक्षणानियमो न सम्भवतीत्यत आह । आदाविति । आदिना इच्छति यतते इत्यादेः सङ्ग्रहः । इदमत्र बोध्यं तण्डुलं पचति चैत्र इत्यादौ कर्मत्वं द्वितीयार्थस्तत्र तण्डुलस्याधेयतयान्वयः कर्मत्वस्य पाके पाकस्याख्यातार्थकृतौ तस्याश्चैत्रइति तण्डुलकर्मकपाकानुकूलकृतिमांश्चैत्र इति बोधः । चैत्रेण पच्यते तण्डुल इत्यत्र कृतिस्तृतीयार्थस्तस्यामाधेयतया चैत्रादेरन्वयस्तस्याश्च धात्वर्थपाके तस्यात्मनेपदार्थफले तस्य चाश्रयतासम्बन्धेन तण्डुले इति चैत्रवृत्तिकृतिजन्यपाकजन्यफलाश्रयस्तण्डुल इत्यन्वयबोधः कृतां तु कर्ता कर्म चार्थः चैत्रः पक्ता तण्डुलः पक्व इत्यादावभेदान्वयानुरोधान्नामार्थयोर्भेदान्वयबोधस्या-

---

रैरिति तृतीयापत्तिरित्यपि प्रत्युक्तमित्यपि विभावनीयम् । जन्यत्वादीति ॥ तज्जन्यत्वे सति तज्जन्यजनकस्यैव व्यापारपदार्थत्वादिति भावः । तदभावेपीति ॥ रथस्याऽचेतनत्वेन यत्नाभावे ऽपीत्यर्थः । गमनानुकूलव्यापारस्येति ॥ उत्तरदेशसंयोगानुकूलक्रिया गमधात्वर्थः । तदाश्रयत्वमेव रथो गच्छतीत्यादौ रथे प्रतीयते न तु तादृशक्रियानुकूलाऽश्वादिसंयुक्तरज्ज्वादिसंयोगवत्त्वमिति भावः । निरूढलक्षणेति ॥ अनादितात्पर्यविषयलक्षणेत्यर्थः । आदिनेति ॥ तथा च जानातीत्यत्र शाब्दत्वावच्छिन्नं प्रति पदजन्यतद्विषयोपस्थितित्वेन हेतुत्वात् प्रकारविशेष्यमर्यादया शाब्दबोधे पदाऽनुपस्थापितस्य भानासम्भवात् संसर्गभानार्थं न शा-

निरूढलक्षणा। उपमानाद्यथा शक्तिग्रहस्तथोक्तम् । एवं कोशादपि शक्तिग्रहः सति बाधके क्वचित् त्यज्यते यथा नीलादिपदानां नीलरूपादौ नीलविशिष्टे च शक्तिः कोशेन व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः नीलादिविशिष्टे तु लक्षणा इति । एवमाप्तवाक्यादपि यथा कोकिलः पिकशब्दवाच्य इत्यादिशब्दत् पिकादिशब्दानां कोकिले शक्तिग्रहः । एवं व्यवहारादपि यथा प्रयोजकवृद्धेन घटमानयेत्युक्तं तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतस्तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमान-

---

व्युत्पन्नत्वादित्यन्यत्र विस्तरः । तथोक्तमिति । उपमाननिरूपणावसरइति शेषः । शक्तिग्रह इति । भवतीति शेषः । कोशेन व्युत्पादितेति । गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीति कोशस्योभयत्र शक्तिग्राहकत्वादिति भावः । लाघवादिति । नीलादिमत्त्वापेक्षया नीलत्वादिजातेर्लघुतया शक्यतावच्छेदकत्वादिति भावः । नीलादिविशिष्टे तु लक्षणेति । गुणवचनान्मतुपो लुगिष्ट इति स्मरणाल्लुप्तेन मतुपैव विशिष्टार्थबोधसम्भवे ऽलं लक्षणयेत्यापि वदन्ति । तत्, घटानयनं न तु व्यवहारेणानयनादिनाऽनुमितघटानयनादिधर्मिककार्यताज्ञाने पदानां कारणत्वं लाघवात्पदत्वावच्छेदेनैव गृहीतम् एवं च साक्षात्परम्परया वा कार्यत्वान्वितविषयकशाब्दत्वावच्छिन्नं प्रति पदत्वेन कारणतेति कार्यकारणभावः पर्यवसितः। इयमेव

---

ब्दबोधे पदद्वयसमभिव्याहाररूपविशेषाकाङ्क्षानियम एवेति * न तत्रापि पदजन्यत्वं, निजानन्यलभ्यशब्दार्थसंसर्गे शक्तिकल्पनमिति न्यायविरोधादपि संसर्गे न शक्तिरुपेयते संसर्गस्याकाङ्क्षालभ्यत्वादिति भावः ।

---

* नियम्य एवेति १ पु० ।

येति शब्दप्रयोज्यमित्यवधारयति ततश्च घटमानय गामानये-त्यादिवाक्यादावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। इत्थं च भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधः घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात् कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तदभावान्न शाब्दबोध इति केचित्। तन्न। प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात्। अत एव चैत्र पुत्रस्ते जातः कन्या ते गर्भिणीत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया

---

कार्यान्विते पदानामानुभाविकी शक्तिः। एवं च कार्यत्वान्वितविषयकशाब्दत्वव्यापकीभूतकार्यताविषयकशाब्दत्वावच्छिन्नजनककार्यतावाचकलिङादिपदाभावात् कथं कोशादितः शक्तिग्रह इति प्रभाकराक्षेपं तन्मतदूषणेन दूषयितुं तन्मतसिद्धमर्थं प्रदर्शयति । इत्थं चेत्यादिना । एतेन स्मारकशक्तिप्रसङ्गे अनुभावकशक्तिप्रदर्शनमनुचितमित्याशङ्का निरस्ता । ननु भूतले नीलो घट इत्यादितः कार्यताविषयकबोधापत्तिः तत्र तादृशपदानां सामर्थ्यावधारणादिति त्वयैवोक्तत्वादित्यत आह । कार्यताबोधं प्रति चेति। सामर्थ्यात्तदभावादिति । कार्यताबोधं प्रति लिङादिपदानां स्वजन्यकार्यत्वोपस्थितिद्वारा हेतुत्वम् । घटादिपदानां कार्यत्वानुभवं प्रति हेतुत्वेऽपि घटादिपदेषु कार्यत्वस्मारकशक्त्यभावेन स्मारकशक्त्या कार्यत्वोपस्थापकलिङादिपदाभावान्न भूतले घट इत्यादितः शाब्दबोध इति भावः। लाघवेनेति । कार्यत्वान्वितघटशाब्दत्वापेक्षया घटशाब्दत्वस्य कार्यतावच्छेदकत्वे लाघवेनेत्यर्थः । अत एव, कार्यत्वाविषयकबोधं प्रति पदानां हेतुत्वादेवातत्कारणत्वेन, सुखदुःखयोः कारणत्वेन। तद्धेतुतया, तादृशशाब्दबो-

तं शब्दमवधारयति तथा च व्यभिचारान्न कार्यान्विते शक्तिः। न च तत्र तं पश्येत्यादिशब्दान्तरमध्याहार्यं मानाभावात्, चैत्र पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च । इत्थं च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति । एवं वाक्यशेषादपि शक्तिग्रहः यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः कङ्गौ तु म्लेच्छानां तत्र हि यदान्या ओषधयो म्लायन्ते ऽथैते मोदमानास्तिष्ठन्ति इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते कङ्गौ तु शक्तिभ्रमात् प्रयोगः, नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावान्ना-

---

थहेतुतया व्यभिचारादिति । घटादिपदैः कार्यताविषयक। एव बोधो जन्यते इति नियमे व्यभिचारादित्यर्थः । कार्यत्वाविषयकबोधस्य चैत्र पुत्रस्ते जात इत्यादिपदैर्जननादिति भावः । अध्याहार्यमिति । तथा च तत्रापि लोडादिजन्यकार्यत्वोपस्थितेः सत्त्वेन कार्यताविषयकबोधस्यैवोत्पादान्न तादृशनियमे व्यभिचार इति भावः । तदभावाच्चेति । तं पश्येत्यादिकार्यताबोधकपदाध्याहारासम्भवाच्चेत्यर्थः । भट्टमतं प्रक्षिपन् स्वमतमुपसंहरति । इत्थं चेति । लाघवादिति । अन्वितघटे शक्तिकल्पनापेक्षया घटमात्रे तत्कल्पने लाघवादित्यर्थः । यवपदस्येत्यस्य देहलीदीपन्यायेनान्वयः । तत्र हि तादृशद्विविधव्यवहारेण कङ्गौ दीर्घशूके वा यवपदस्य शक्तिरिति सन्देहे सति यवपदस्येति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते इत्यन्वयः । नन्वस्तु यवपदस्य वाक्यशेषाद् दीर्घशूके शक्तिः कङ्गावपि शक्तिसत्त्वे बाधकाभाव इत्यत आह । नानाशक्तीति । कथं

---

देहलीदीपेति। देहलीस्थो यो दीपः भवनान्तःस्थवद्बहिःस्थवस्तुप्रकाशकत्वेन संबध्नाति तथोक्तषष्ठ्यन्तमिति भावः । तत्र हीत्यादिमूलग्रन्थे ऽन्वयप्रकारमाह तत्र हीति ॥

नाशक्तिकल्पनम् । एवं विवरणादपि शक्तिग्रहः । विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनं यथा घटोस्तीत्यस्य कलशोस्तीत्यनेन विवरणात् घटपदस्य कलशे शक्तिग्रहः । एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणात् आख्यातस्य यत्नार्थकत्वं कल्प्यते । एवं प्रसिद्धपदस्य सान्निध्यादपि शक्तिग्रहः यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ

---

तर्हि हर्यादिपदे नानाशक्तिकल्पनेत्यत आह । हर्यादिपदे त्विति । विनिगमकाभावादिति । तत्र कोशस्योभयत्र तुल्यत्वात् प्रकृते च वाक्यशेषस्यैव विनिगमकत्वादिति भावः । आख्यातस्य यत्नार्थकत्वमिति । न च विवरणस्य कथं शक्तिग्राहकत्वं तद्वाचकपदाभावादिति वाच्यम् । आख्यातं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टशक्तिं करोति प्रतिपादितार्थप्रतिपादकत्वादित्यनुमानविधया तस्य शक्तिग्राहकत्वात् । प्रसिद्धपदस्येति । प्रसिद्धार्थकपदस्येत्यर्थः । तिङर्थधर्मिणि नामार्थान्वयस्याव्युत्पन्नतया नेदं शक्तिग्रहस्योदाहरणमिति तु न । यो यः शूद्रस्य पचति द्विजोन्नं सोतिनिन्दित इत्यादौ तिङर्थधर्मिणि तथान्वयदर्शनेन तादृशनियमस्यासिद्धेः । प्रस-

---

यवमयश्चरुर्भवतीत्यत्र हीत्यर्थः । शक्तिनिर्णये वाक्यशेषापेक्षया सन्देहः सम्भवतीत्यभिप्रायेण तादृशेत्यादि । सत्यन्तं पूरयति तादृशेति ॥ तद्वाचकपदाभावादित्यर्थः । कोशे तु विनायको विघ्नराज इत्यादौ सप्तम्या वाचकत्वार्थकतया वाचकतायाश्च शक्तिनिरूपिततया तद्वाचकपदमस्त्येवेति भावः । अमरा निर्जरा देवा इत्यादावेवकारशब्दार्थकता इत्यध्याहाराच्छक्तिग्राहकमित्यपि बोध्यम् । प्रसिद्धार्थकपदस्येति ॥ प्रसिद्धार्थकसमभिव्याहारोऽप्यनुमानविधया शक्तिग्राहकः तथाप्युक्तवाक्यादिहाम्रवृक्षे मधुररावकर्ता पिकपदवाच्य इत्येव बोधः । पिकपदस्य पूर्वं शक्तिग्रहाभावात् कोकिलदर्शनानन्तरं कोकिलः पिकपदवाच्यः सहकारतरौ

पिकशब्दस्य कोकिले शक्तिग्रह इति तत्र जातावेव शक्तिग्रहः न तु व्यक्तौ व्यभिचारादानन्त्याच्च । व्यक्तिं विना जातिभानस्यासम्भवाद् व्यक्तेरपि भानमिति केचित्

---

कत्परमतनिराकरणपूर्वकं स्वमते जात्यादिविशिष्टे शक्तिं व्यवस्थापयितुं मीमांसकमतमाह । जातावेवेति । जातिविशिष्टे शक्तिस्वीकारे जातावपि शक्तिग्रहस्यावश्यकता नागृहीतविशेषणन्यायात् । तथा च जातावेव शक्तिर्लाघवात् । तदुक्तं विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे इति भावः । यस्यां कस्याञ्चिद् व्यक्तौ शक्तिः सर्वासु वेति विकल्प्य आद्ये दोषमाह । व्यभिचारादिति । अगृहीतशक्तिकव्यक्तावपि शाब्दबोधोदयेन तत्र शक्तिज्ञानाभावाद् व्यभिचार एवेति भावः । द्वितीये तमाह । आनन्त्यादिति । व्यक्तिभेदेन शक्तिभेदाच्छक्त्यानन्त्यमित्यर्थः । असम्भवादिति । जाति-

---

मधुररावकर्तृत्वादित्यनुमानादेव शक्तिग्रह इति ध्येयम् । प्रसङ्गादिति ॥ प्रसङ्गसङ्गतेरित्यर्थः । नागृहीतेति ॥ नाऽगृहीतविशेषणा बुद्धिर्विशिष्टेनोपजायते, विशिष्टविषयिणी न भवतीत्यर्थः । सप्तम्या विषयत्वार्थकत्वात् । लाघवादिति ॥ घटत्वविशिष्टनानाघटेषु शक्तिकल्पनामपेक्ष्य शुद्धघटत्वे शक्तिकल्पने लाघवादित्यर्थः । विशेष्यमित्यादि ॥ अभिधा, शक्तिः विशेष्यं न गच्छेत् न प्राप्नोति कुत इत्याकाङ्क्षायामाह क्षीणशक्तिर्विशेषणइत्यनन्तरम् अनुगतशक्तिरिति पूरणीयम् । यतो विशेषणं प्राप्य पदशक्तिः क्षीणसामर्थ्या भवति अतः विशेष्यं नाभिधा गच्छेत् । वक्ष्यमाणरीत्या विशेषणशक्तात् पदादेव विशिष्टविषयकशाब्दबोधोपपत्तौ विशेष्यांशशक्तिकल्पने बीजाभावादिति पर्यवसितार्थः । व्यक्तौ शक्तिस्वीकारे व्यभिचारादानन्त्याच्चेति दूषणद्वयं मूले ऽभिहितम् । तयोस्सङ्गमनीयं विकल्प्य दूषयति यस्यामिति ॥ व्यभिचार इति ॥ तद्विषयकशाब्दबोधं प्रति तद्धर्मिकशक्तिज्ञानमेव हेतुर्वाच्यः । अन्यथा घटादिपदात्पटादिशाब्दबोधापात्तिः । तथा च घटपदव्यक्तावेव घटशक्तिस्वीकारे घटान्तरविषयकशाब्दबोधान्यथानुपपत्त्या ता-

तन्न । शक्तिं विना व्यक्तिभानानुपपत्तेः । न च व्यक्तौ लक्षणा, ऽनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात् न च व्यक्तिशक्तावानन्त्यं सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात् ।

---

भासकसामग्रचा एव व्यक्तिभासकत्वादिति भावः । इदमेव कथमिति चेद् व्यक्तिविशेष्यकजातिप्रकारकशाब्दबोधे जातिविषयकशक्तिज्ञानत्वेन हेतुत्वात् । न च तादृशबोधे व्यक्तिशक्तिज्ञानत्वेन हेतुत्वमुपगम्य व्यक्तावेव शक्तिः किं नाङ्गीक्रियतइति वाच्यं, तथा सति उक्तानन्त्यादिदोषप्रसङ्गादिति । शक्तिं विनेति । पदजन्यपदार्थोपस्थितेः शाब्दबोधं प्रति हेतुतया व्यक्तिशक्तिं विना तद्ज्ञानानिर्वाहादिति भावः । लक्षणेति । तावतैव वृत्त्या पदजन्यपदार्थोपस्थितेर्निर्वाहादिति भावः । अनुपपत्तिप्रतिसन्धानं विनापीति । गामानयेत्यादौ गोत्वजातेरानयनान्वयानुपपत्त्या गोपदस्य

---

इशकार्यकारणभावे व्यभिचार इति भावः । द्वितीयकल्पे दूषणमाह आनन्त्यमिति ॥ सकलव्यक्तिषु शक्तिस्वीकारे व्यक्तीनामानन्त्येन शक्तीनामानन्त्यमिति द्वितीयदूषणसङ्गतिरिति भावः । मूले व्यक्तौ शक्त्यभावे शाब्दबोधे व्यक्तिभानासम्भव इत्याशङ्कायां व्यक्तिं विना जातिभानाऽसम्भवाद्व्यक्तिभानमुक्तं तत्र सङ्गच्छते यत्र गोत्वमुख्याविशेष्यकस्मरणं तत्र व्यक्तिं विनापि जातिभानादेवं व्यक्तिभासकसामग्रीमन्तरेण शाब्दबोधे व्यक्तिभानासम्भवाच्चेत्यतः तद्ग्रन्थं व्याचष्टे जातीति ॥ तथा च जातिविशेष्यकशक्तिज्ञानं शाब्दबोधाज्जातिभासकं तदेव व्यक्तिभासकमपीति भावः । पदजन्येति ॥ तद्विषयकशाब्दबोधम्प्रति तद्विषयकपदजन्योपस्थितेर्हेतुतया जातिपदयोरेव सम्बन्धग्रहे पदरूपैकसम्बन्धिज्ञानाज्जातिरूपसम्बन्ध्यन्तरस्यैव स्मरणं भवति न तु व्यक्तेरिति पदजन्यव्यक्तिस्मरणाभावेन व्यक्तिशाब्दबोधानिर्वाहात् व्यक्तौ शक्तिरावश्यकीति भावः । ननु व्यक्तौ पदजन्यलक्षणास्वीकारे ऽपि शक्त्या पदजन्यस्मरणाभावेन कथं व्यक्तिविषयकशाब्दबोध इत्याशङ्कायामाह तावतैवेति ॥ निर्वाहादिति ॥ शक्तिलक्षणयोर्द्वयोरपि

न चाननुगमः गोत्वादेरेवानुगमकत्वात्।किं च गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः यदि गो त्वं शक्यमिति

---

गवि लक्षणास्वीकारेपि गौरस्तीत्यादौ गोत्वजातेरस्तित्वाद्यन्वयानुपपत्तेर्लक्षणाबीजस्याभावेन लक्षणायाः स्वीकर्तुमशक्यत्वादिति भावः । स्वमते पूर्वोक्तदोषमाशङ्क्य वारयति । न चेत्यादिना । एकस्या इति । ईश्वरेच्छारूपायास्तस्या एकत्वादित्यर्थः । न चाननुगम इति । गोव्यक्तीनामननुगततया विषयतासम्बन्धेन शक्तिज्ञानकारणतायामच्छेदकत्वासम्भव इत्यर्थः । गोत्वादेरेवेति । तथा च गोशाब्दबोधे गोत्वविशिष्टविषयकशक्तिज्ञानत्वेन हेतुत्वान्नोक्तदोष इति भावः । ननु सर्वत्र पदजन्यपदार्थोपस्थितेर्हेतुत्वे मानाभावः कथमन्यथा शाब्दबोधे संसर्गज्ञानम् । न चैवं पदानुपस्थितघटादेरपि भानापत्तिरिति वाच्यम् । गोविशेष्यकगोत्वप्रकारकशाब्दबोधं प्रति

---

वृत्तित्वादिति भावः । पूर्वोक्तेति ॥ शक्त्यानन्त्यप्रसङ्गरूपमित्यर्थः । अननुगततयेति ॥ अननुगताऽनतिप्रसक्तधर्मावच्छिन्नतयेत्यर्थः । अवच्छेदकत्वासम्भव इति ॥ व्यक्तिषु तथाविधैकधर्मसत्त्वे तदवच्छिन्नविषयकशाब्दं प्रति तदवच्छिन्नविशेष्यकशक्तिज्ञानत्वेन हेतुतासम्भवाच्छक्तिज्ञाननिष्ठकारणतायां विषयविधया शक्तेरेवावच्छेदकत्वं सम्भवति न तादृशधर्माभाव इत्यर्थः । न च तद्विषयकशाब्दबोधं प्रति तद्विषयकशक्तिज्ञानं हेतुरस्त्विति वाच्यम् । तथा सति शक्तिज्ञानविषयस्य पूर्वाऽननुगतगवादेः शाब्दबोधासत्त्वापत्तेरिति भावः । व्यक्तीनामननुगमे व्यक्तेर्यथा शाब्दज्ञाननिष्ठकारणतायामवच्छेदकत्वसम्भवः तथोपपादयति तथा चेति ॥ गोशाब्दबोधे, गोत्वावच्छिन्नविषयकशाब्दबोधे इत्यर्थः । सर्वत्रेति ॥ तद्विषयकशाब्दबोधसामान्ये तद्विषयकपदजन्योपस्थितित्वेन हेतुत्वे मानाभाव इत्यर्थः । उक्तत्वादिति ॥ तथा च घटत्वे घटपदशक्तिज्ञानरहितस्य घटविषयकशाब्दबोधापत्तिर्न सम्भवतीति भावः । न चैवमपि तादृशशक्तिज्ञानवतः प-

शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न-
स्यात् समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शा-

---

गोत्वशक्तिज्ञानत्वेन हेतुत्वस्योक्तत्वादेतादृशातिप्रसङ्गविरहादित्यत आह । किं चेति । तदा व्यक्तौ शक्तिरिति । गौः शक्येति विशिष्टज्ञानं प्रमात्मकमेव त्वन्मते ऽन्यथाख्यात्यभावात् प्रमायाश्च वस्तुसाधकत्वादिति भावः । समानप्रकारकत्वेनेति । ईदृशशक्तिज्ञानस्य गोत्वप्रकारकत्वाभावेन गामानयेत्यादौ गोत्वप्रकारकस्मरणशाब्दबोधयोरनुपपत्तिरित्यर्थः । न च गोपदं गोत्वे शक्तमित्येतादृशशक्तिग्रहस्यैव शाब्दबोधे हेतुत्वात् तस्य च शक्यांशे गोत्वप्रकारकत्वात् न तत्प्रकारकशाब्दबोधानुपपत्तिरिति वाच्यम् । शक्तिग्रहे यदंशे गोत्वादिप्रकारकत्वं शाब्दबोधस्यापि तदंशे गोत्वादिप्रकारकत्वमित्येतादृशसमानप्रकारकत्वस्य परमते सिद्धान्तितत्वात् । अत एवापूर्ववादे ऽपूर्वस्य पूर्वमनुपस्थिततत्वात् कथं तत्र शक्तिग्रह इत्याशङ्क्य कार्यत्वेन घटादिषु शक्तिग्रहात् योग्यतया शाब्दबोधे ऽपूर्वभानमित्युक्तं तैरिति । ननु कार्यत्वाद्युपाधिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वस्य तदनुमतत्वेपि जातिप्रकारकशाब्दबोधस्थले तादृशसमानप्रकारकत्वं न तदनु-

---

कारेण पदजन्योपस्थितेरपि तादृशशाब्दबोधहेतुत्वोपगमादिति भावः । शक्तिज्ञानस्य[1] साक्षाच्छाब्दबोधहेतुत्वे ऽपि न व्यक्तौ शक्तिसिद्धिः उक्तज्ञानस्य भ्रमत्वाङ्गीकारात् । न हि भ्रमाद्वस्तुसिद्धिरिति न्यायादत आह गौरित्यादि ॥ शाब्दबोधाऽनुपपत्तिरिति ॥ गोत्वगोपदयोरेव शक्तिरूपसम्बन्धज्ञानाद्गोत्वस्यैव स्मरणत्वमुपपद्यते[2] न तु व्यक्तेरपीत्याशयाच्च स्मरणपरित्यागः । यदंशइति ॥ स्वात्मकयद्धर्माश्रयइत्यर्थः । तादृशेत्यत्रापि तद्धर्माश्रयांशइत्यर्थः । तत एव द्वयम् एकधर्मपरं तथा च स्वाश्रयगोत्वादिप्रकारकज्ञानं स्वाश्रयगोत्वादिप्रकारकशाब्दं प्रत्येव शक्तं, गोत्वप्रकारक-

---

१ शक्तिज्ञानं च न साक्षादिति १ पु० ।
२ बोधस्यैव स्मरण त्वमिति १ पु०

ब्दबोधं प्रति च हेतुत्वात् । किं च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यं गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगोसमवेतत्वम् । तथा च गोव्यक्तीनां

---

मतमत आह । किं चेति । शक्यतावच्छेदकं वाच्यमिति । गोत्वधर्मिकगोत्वादिशक्तिज्ञानस्य वा शाब्दबोधहेतुत्वे गोत्वत्वावच्छिन्नगोत्वविषयताया निवेश आवश्यकः । निर्धर्मितावच्छेदकशक्तिज्ञानस्य गोत्वाद्यंशे निष्प्रकारकशक्तिज्ञानस्य वा विपरीतज्ञानाऽप्रतिबध्यस्य शाब्दबोधाहेतुत्वात्

---

शक्तिज्ञानाद् व्यक्तौ गोत्वप्रकारकशाब्दबोधाऽनुपपत्तिः। शक्तेर्गोत्वाश्रयत्वादित्यर्थः॥ जातिप्रकारकेति॥तत्रैव व्यक्तौ शक्त्यैक्यं निरवच्छिन्नत्वाऽसम्भवेन लाघवसम्भवादिति भावः । अत एव तैरपि गोपदस्य रोमलाङ्गूलादिविशिष्टव्यक्तावेव शक्तिरुपेयते न तु लाङ्गूलएवेति आनन्त्यात्स्वरूपतो भानाऽसम्भवाच्चेति ध्येयम् । विपरीतज्ञानाविरोधिन इति ॥ समानधर्मितावच्छेदककयोर्बोधनिष्ठबुद्ध्योरेव प्रतिबन्धकाभावान्निर्धर्मितावच्छेदके विशिष्टबुद्धबोधबुद्ध्यप्रतिबध्यतया गोत्वजातिर्न गोपदशक्येति बुद्धिदशायामप्युक्तशक्तिज्ञानात् गोपदाद् गोत्वप्रकारकशाब्दबोधापत्तिः निर्धर्मितावच्छेदककशक्तिज्ञानस्य हेतुत्वाभ्युपगम इति भावः । अनुभवविरुद्धञ्चेति * । न हि गोत्वत्वेन गोत्वावगाहिनो गोत्वं न गोपदशक्यमिति बाधबुद्धिकाले गोपदाद्गोत्वविषयकशाब्दबोधः क्रियतइति आशयात् । यद्यपि गोत्वप्रकारकस्येयङ्गौरित्याकारकस्य बोधस्य नेयङ्गौरिति बाधबुद्धिप्रतिबध्यत्वात् व्यक्त्यंशे स्वरूपतो गोत्वप्रकारकत्वमपि गोपदं न गोत्वमिति बाधबुद्धिप्रतिबध्यमेवेति गोत्वत्वेन गोत्वस्य प्रकारत्वं पश्यति तथाविधबोधेनैव जातेः स्वरूपतः प्रकारत्वमभ्युपगम्यते नान्यसम्बन्धेनेति नियमः । अन्यथा ज्ञानं गुण इतिवज्ज्ञानं घट इत्यादिव्यवहारापत्तेः । ज्ञाने विषयतया घटत्वसत्त्वाच्छक्त्यंशे तु गोत्वस्याधेयतासम्बन्धेनैव प्रकारता वाच्या । तथा च गोत्वत्वेनैव गोत्वभान-

---

* एतदग्रे अयं भाव इत्यधिकं २ पु० ।

शक्यतावच्छेदके ऽनुप्रवेशात् तत्रैव गौरवम् । तस्मात् तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना

---

तथा च गोत्वत्वे शक्यतावच्छेदकत्वावगाहितादृशप्रमाया विषयसाधकत्वाद्गोत्वत्वे शक्यतावच्छेदकत्वसिद्धिरिति भावः । तत्रैव गौरवमिति । न च गोत्वत्वावच्छिन्नविषयकशक्तिज्ञानस्य कारणत्वेपि संभ्रमो न तु तस्य विषयसाधकत्वमिति वाच्यम् । तथा सति प्रतीतेः कारणतावच्छेदकत्वाद्यंशेपि भ्रमत्वस्य वक्तुं शक्यतया कारणतावच्छेदकत्वादीनां कुत्रापि सिद्धिर्न स्यात् । अस्तु वा गोत्वत्वादीनामवच्छेदकत्वं तथापि गवेतरासमवेतत्वादिघटितगोत्वत्वादेर्धर्मितावच्छेदकताद्यात्मकाविषयतायाः शाब्दबोधकारण-

---

मङ्गीकार्यमित्यत्रैव तात्पर्यम् । इदञ्च विपरीतज्ञानाविरोधियव्युत्पत्त्या । विपरीतज्ञानाऽप्रतिबध्यस्येति ॥ विपरीतज्ञानाऽविरोधिन इत्यर्थः । प्रथमज्ञानस्य प्रतिबध्यत्वे निर्धर्मितावच्छेदककत्वं हेत्वंशे हेतुः । द्वितीयस्य तु तथात्वे प्रतिबध्याऽप्रसिद्धिरेव हेतुरिति विभावनीयम् । शक्यतावच्छेदकत्वसिद्धिरितीति । न च प्रतीतिशक्यताया गोत्वत्वसामानाधिकरण्यमेव विषयः न तु तदवच्छिन्नत्वमपीति वाच्यम् । प्रतीतीनां विशिष्टवैशिष्ट्याऽवगाहित्वस्य औत्सर्गिकत्वेन तत्परित्यागस्यानौऽचित्याद्विशिष्टवैशिष्ट्यबोधे च विशेषणतावच्छेदकविशेष्यतावच्छेदकयोस्तद्धर्मिपारतन्त्र्येण विशेषणविशेष्ययोरवच्छिन्नत्वादिसम्बन्धेन भानोपगमादिति भावः । न चेति ॥ तटस्थानामियमाशङ्का न तु प्राभाकरणान्तैर्भ्रमानङ्गीकारात् इति ध्येयम् । ननूत्सर्गबाधकयोरेकाबोधनियम एव । प्रकृते च अनन्तगोव्यक्तीनां शक्यतावच्छेदककोटिप्रवेशगौरवमेव विशेष्यावगाहिताया नास्त्येव । वस्तुतो विशिष्टवैशिष्ट्यबोधे संसर्गांशएव विशेषणतावच्छेदकविशेष्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वानुयोगिताकत्वयोर्बोध उपेयते न तूक्तरीत्या प्रकारत्वप्रतीतेर्भिन्नाकारकत्वादित्यस्वरसादाह अस्तु वेति ॥ विषयताया इति ॥ गोत्वत्वस्य गोघटितमूर्तिकत्वादिति भावः । मूले जात्याकृतिविशिष्टव्यक्तौ शक्तिप्रतिपादना-

तावच्छेदककोटिप्रवेशप्रयुक्तं गौरवं दुर्वारमेवेति । स्वमतमुपसंहरति । तस्मादिति । व्यक्ताविति । जात्याकृतिविशिष्टव्यक्तावेव । अवयवसंस्थानविशेषरूपाया आकृतेः शक्यत्वेपि न जातिवत्तदवच्छेदकत्वम् । सामानाधिकरण्यसम्बन्धस्य शक्यतावच्छेदकतावच्छेदकत्वकल्पने गौरवात् अत्र च परस्परपरित्यागेन परस्परस्य बोधाभावात् त्रिष्वेकैव शक्तिरेतद्बोधनायैव सूत्रे जात्याकृतिव्यक्तयः पदार्थ इत्येकवचनमिति सम्प्रदायः । नव्यास्तु संस्थानानुपस्थितावपि गोत्वादिना गवाद्यन्वयबोधाज्जातिविशिष्टव्यक्तावेव शक्तिः संस्थाने च पृथगेव शक्तिः, व्युत्पत्तिवैचित्र्याच्च संस्थानव्यक्त्योरेकपदार्थयोरपि परस्परमन्वयबोधः । सौत्रं पदार्थ इत्येकवचनं तु जातिव्यक्त्योरेकशक्तिलाभायैवेत्याहुः । तच्छब्दस्य वक्तृबुद्धिविषयतावच्छेदकीभूतघटत्वाद्यवच्छिन्ने शक्तिः । अथ घटत्वादीनां शक्यतावच्छेदकत्वे शक्यतावच्छेदकभेदाच्छक्तिभेदापत्तिः । न च शक्यतावच्छेदकभेदेपि शक्यतावच्छेदकतावच्छेदकस्य बुद्धिविषयतावच्छेदकत्वस्यैक्यान्न शक्तिभेद इति वाच्यम् । तस्य शक्यतावच्छेदकतावच्छेदकत्वे शाब्दबोधे तज्ज्ञाना-

---

न् जात्याकृत्योर्द्वयोरेकं शक्यतावच्छेदकमित्यापतितं तन्न सङ्गच्छते लाघवाज्जातिमात्रस्यैव शक्यतावच्छेदकत्वौचित्यात् । न च त्रिष्वप्येकैव शक्तिरिति वक्ष्यमाणतया गोत्वस्य शक्यतान्यूनवृत्तितया कथं तदवच्छेदकतासम्भव इति वाच्यम् । व्यक्तिशक्तित्वविशिष्टशक्यताव्यापकशुद्धशक्तितात्वावच्छिन्नानतिप्रसक्तत्वेन च विशिष्टशक्यतायामवच्छेदकत्वसम्भवात् । अन्यथोभयोः शक्यतावच्छेदकत्वे ऽपि तद्दोषतादवस्थ्यात् । एवं त्रयाणाम् एकशक्तित्वे ऽपि कस्य चिद्विशेषणतया कस्य चिद्विशेष्यतया भानमपि मतद्वये ऽपि व्युत्पत्तिवैचित्र्येणैवोपपादनीयमिति भावः । अवयवसंस्थानम्, अवयवसंयोगः । सामानाधिकरण्येति ॥ शक्ये गवि सामानाधिकरण्यसम्बन्धेनैवावयवसंयोगसत्त्वादिति भावः । इदमुपलक्षणम् । शुद्धगोत्वजातेरवयवसंयोगापेक्षया शरीरलाघवं नानासंयोगव्यक्तीनामवच्छेदकताकल्पनमपेक्ष्य एकस्या जातेस्तत्कल्पने ऽपि लाघवमप्यनुसन्धेयम् । एकैवेति ॥ नानाशक्तिनानार्थहर्यादिपदादेकैकस्याऽर्थस्य शाब्दबोधादिति भावः ।

पत्तेरिति चेन्न । बुद्धिविषयतावच्छेदकत्वस्योपलक्षणतया शक्यतावच्छेदकता-

---

एकवचनमिति ॥ एकवचनार्थैकत्वस्य पदार्थत्वं पदशक्तेरन्वयएव तात्पर्यादिति भावः । जातिविशिष्टव्यक्तावेवेत्यनन्तरम् एकैवेति पूरणीयम् । अन्यथा आकृतावपि पृथक्शक्तिस्वीकारादेवकाराऽसङ्गतिरिति ध्येयम् । नन्वेकपदार्थयोः परस्परं नान्वयबोधः । अन्यपदार्थयोरन्याश्रितयोरपि पदार्थयोः परस्परमन्वयप्रसङ्गात् । तथा सत्याकृतेरपि व्यक्त्यनाश्रिततया ऽन्वयाऽनुपपत्तेः । तस्मान्नानार्थयोरिव स्वस्थापितार्थयोरेव भेदान्वये निराकाङ्क्षत्वस्योपगन्तव्यत्वादत आह व्युत्पत्तीति ॥ तथा चैकपदार्थयोः परस्परमन्वयिन्याकाङ्क्षाविरहे ऽपि एवकारार्थानामिहाऽऽकृतिव्यक्त्योरपि अन्वये आकाङ्क्षा कल्प्यते अनुभवानुरोधादिति भावः । नन्वेवमपि सूत्रे एकवचनाऽनुपपत्तिः शक्तेरैक्याभावादित्यत आह सौत्रमिति ॥ आहुरित्यस्वरसोद्भावनम् । तद्बीजन्तु पदार्थतावच्छेदके शक्यत्वस्य सङ्ख्याति तन्त्वेनैकवचनार्थोऽन्वयाऽनुपपत्तिरेवेति ध्येयम् । प्रसङ्गात्तदादिशब्दाना शक्यतावच्छेदकमाह तच्छब्दस्येति ॥ व्यक्तौ तच्छब्दोच्चारकज्ञानविषयतायामवच्छेदकं घटत्वादि तदवच्छिन्ने तदुच्चरिते तत्पदस्य शक्तिरित्यर्थः । यद्यपि लाघवात् बुद्धिस्थे इत्येव वक्तुमुचितं तथापि सो ऽस्तीत्यादौ अनुभवस्य घटेन घटबोधस्योपपत्तये गौरवमप्यङ्गीकृतमिति ध्येयम् । शक्तिभेदापत्तिरिति ॥ शक्तिभेदे तदादीनामपि नानार्थत्वापत्तिरिति भावः । तथा सति सकृदुच्चरित इति न्यायेन अन्यावित्यादावेकदा घटपटयोर्बोधाऽनुपपत्तेः । नानार्थप्रकरणे तदादीनां कोशे अनुक्तेश्चेति भावः । तद्भानापत्तेरिति ॥ पश्वादिपदजन्यशाब्दबोधे लोमलाङ्गूलादेस्तथाविधस्य भानदर्शनादिति भावः । प्रकृते च सो ऽस्तीत्यादौ घटो ऽस्तीत्येव बोधो ऽनुभवसिद्धः, न तु बुद्धिविषयतावच्छेदकावच्छिन्नो ऽस्तीत्याकारक इति नेदृशापत्तिसम्भव इति मन्तव्यम् । उपलक्षणतयेति । तत्पदजन्यशाब्दबोधविषयत्वेन भगवदिच्छायामविषयत्वे सति तत्पदशक्यतावच्छेदकत्वाऽनुगमत्वमुपलक्षणतया तत्पदशक्यतावच्छेदकत्वम् । वस्तुतस्तु शाब्दबोधविषयतावच्छेदको यो धर्मो ऽस्ति तदवच्छिन्नं तत्पदजन्यबोधविषयो भवत्वित्याकारकभगवदिच्छायां बोधविषयतावच्छेदकत्वस्य तत्पदजन्यबोधविषयत्वेनापि विषयत्वस्योपलक्षणविधया

वच्छेदकत्वात् उपलक्षणस्य च शाब्दबोधे भानानङ्गीकारात् घटत्वादेश्च शक्यतावच्छेदकत्वं विशेषणत्वेनैव अतस्तस्य शाब्दबोधे भानम्। विशेषणत्वं च तत्तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वम्, उपलक्षणत्वं च तत्तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वमिति। एवमिदम्पदादिष्वपि तत्रापीदमेतदोः प्रत्यक्षबुद्धिविषये ऽदसः परोक्षबुद्धिविषये शक्तिः। अत एव तेषां विभिन्नार्थकत्वम्। एवं तदोपि। "इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदोरूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीया" दित्यपि वदन्ति। किंपदस्य जिज्ञासाविषयत्वविशिष्टे शक्तिः, सर्वपदस्य व्यापकत्वे, सर्वे घटा रूपवन्त

---

शक्यतावच्छेदकतावच्छेदकत्वं यद्यपि बोधविषयतारूपं विषयभेदेन भिन्नमेवेति तथापि बोधविषयतावच्छेदकतावच्छेदकरूपानुगतैकधर्मावच्छिन्नत्वादेकत्वव्यपदेशः। एकमेवाऽविषयस्थाने विषयत्वं निवेश्य विशेषणविधया शक्यतावच्छेदकत्वं निर्वाच्यम्। तच्च रोमलाङ्गूलत्वादेरेवेति विभावनीयम्। प्रत्यक्षबुद्धिविषय इति॥ तादृशबुद्धिविषयतावच्छेदकावच्छिन्नइत्यर्थः। बुद्धिरेव अयमित्यादिपदा१द्घटादिबोधनिर्वाहः। अयं घट इत्यादौ एतद्देशे तत्कालवृत्तित्वादिकमेतत्प्रत्यक्षविषयतावच्छेदकमतो न भेदाऽन्वयाऽनुपपत्तिः। अत एवेति॥ यतः प्रत्यक्षविषये इदमेतदोः परोक्षबुद्धिविषये अदसः शक्तिस्तत एवेत्यर्थः। तेषामिदमेतददसाम्। भिन्नार्थकत्वमिति॥ इदमेतदोरेकार्थः तदन्यो ऽदसो यो ऽर्थः तदन्यस्तु इदमेतदोर्भिन्नार्थकत्वमित्यर्थः। एवमिति॥ भिन्नार्थकत्वमेवेत्यर्थः। एतदोरपीति॥ यतः प्रत्यक्षविषयत्वार्थकत्वं तदन्यत्सामान्यतो बुद्धिविषयतार्थकत्वमिति भावः। केषाञ्चिन्मतमाह इदम इति॥ प्रत्यक्षगतं, प्रत्यक्षविषयीभूतमित्यर्थः। शक्यमिति शेषः। एवमुत्तरत्रापि॥ समीपतरवृत्ति चेति, चकारेण प्रत्यक्षगतमित्यस्य अनुरूपामित्यस्य स्वरूपमित्यर्थः। विप्रकृष्टमिति॥ प्रत्यक्षगतमित्यर्थः। तथा चादसः परोक्षवाचकत्वाच्चविजाअदः सतीर्यादीत्यर्थः! पर्यवसितः। जिज्ञासाविषयत्वविशिष्टइति॥ ज्ञातुमिच्छाविषयः किंशब्दार्थ इत्यर्थः२। तथा च को घट इत्यादौ

---

१ त्वनुमित्यादिपदादिति १ पु०।

२. किं रचितुरेव किं शब्देन प्रतीयते इत्यधिकं २ पु०।

इत्यादौ घटत्वव्यापकं रूपवत्त्वमिति बोधात् । त्वंपदस्य तत्कालीनसम्बोध्यचैत्रत्वादि शक्यतावच्छेदकम् । एवमहंपदस्य तत्कालीनस्वतन्त्रोच्चारयितृचैत्रत्वादिस्वातन्त्र्योक्त्या च वाच्यस्त्वया मद्वचनात् स राजेत्यादौ न मत्पदात् कवेर्बोध इत्यास्तां विस्तरः । इति शक्तिग्रन्थः ।

---

घटो मदीयजिज्ञासाविषय इति शाब्दबोध इति भावः । व्यापत्वइति ॥ उद्देश्यतावच्छेदकनिरूपिते विधेयतावच्छेदकनिष्ठे इति शेषः । सर्वे घटा इत्यादौ घटनिष्ठाऽभावप्रतियोगिताऽनवच्छेदकरूपवत्त्वमेव रूपे घटत्वव्यापकत्वमिति बोध्यम् । त्वंपदस्येति पाठः । अन्यथा यवादीत्यादौ शक्त्यकथनापत्तेः । न त्वमित्यस्य स्वमते पदत्वाच्चेति ध्येयम् । सम्बोध्यचैत्रत्वादिकं सम्बोध्यत्वसमानाधिकरणचैत्रत्वादिकमित्यर्थः । कर्मधारयोत्तरभावप्रत्ययस्य एकपदार्थसमानाधिकरणापरपदार्थतावच्छेदकबोधकत्वात्तत्कालीनसम्बोध्यत्वेन तत्कालोच्चरितसम्बोधनबुद्धिमान् चैत्र इत्यादावव्यवहितोत्तरवाक्यजन्यशाब्दबोधाश्रयत्वेन वक्तुरिच्छाविषयत्वं चैत्रे बोधो जन्यतामित्यादौ चैत्रादिपदात् प्रथमया चैत्रादिविशेषणत्वेन एतादृशमेव सम्बोध्यत्वं प्रतिपाद्य तत्समानाधिकरणत्वाल्लक्षितचैत्रत्वादिकमेव शक्यतावच्छेदकमिति भावः । एवमस्मत्पदस्येति प्रागुक्तेन शक्यतावच्छेदकमित्यनेनान्वेति । स्वतन्त्रेति ॥ स्वतन्त्रोच्चारणकर्तृत्वसमानाधिकरणचैत्रत्वादिकमित्यर्थः । उच्चारणस्तादृशार्थैकवाचत्वेनाभिमतस्य अस्मच्छब्दस्यैवेति ध्येयम् । उच्चारणे स्वतन्त्रत्वञ्च अन्योच्चारणाऽननुवाचकत्वमिति यावत् । न कवेर्बोध इति । पद्यस्थाऽस्मच्छब्दस्य उच्चारणकर्तृत्वे ऽपि कवेर्वाचनीयोच्चारणानुवाचकत्वात्तदुच्चारिताऽस्मच्छब्दान्न कवेर्बोध इतिभावः । एवं युष्मदस्मच्छब्दशक्यतावच्छेदकघटकतत्तत्कालोच्चरितत्वत्राप्युच्चारणमपि स्वतन्त्रमेव ग्राह्यम् । तेन गत्यादौ सम्बोधनपदं प्रथमान्तपदोत्तरपदोत्तरममायत्या इद ते तन्त्रैवेति१ वाक्यजन्यबोधाश्रयत्वेनेच्छाविषयत्वे ऽपि सुखस्य मेधनेक्तयुष्मत्पदान्न शाब्दबोध इति मन्तव्यम् ॥

---

१ सम्बोधनप्रधानानुपादात्रममत्रत्थ इहेति १ पु० ।।

शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति ।

शक्तं पदं तच्चतुर्विधम् क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढम्। तथा हि यत्राऽवयवार्थ एव बुध्यते तद्यौगिकं यथा पाचकादिपदं, यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढं यथा गोमण्डलादिपदम् यत्र तु अवयशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम् यथा पङ्कजादिपदम् । तथा हि पङ्कजपदमवयवशक्त्या पङ्कजनिकर्तृत्वरूपमर्थं बोधयति समुदायशक्त्या च पद्मत्वेन रूपेण

---

शक्तं पदं विभजते शक्तं पदमिति । क्व चिदिति । किञ्चिदित्यर्थः । एवमग्रेपि । मण्डलादीत्यत्र बहुपुस्तकेषु मण्डपादीति पाठः स प्रामादिकः। प्रतिबन्धक-

---

पदं विभजतइति॥यद्यपि शक्तं पदमिति न पदविभागरूपपदलक्षणेमव तथा च विभजते शक्तमित्यनुपपन्नमेव तथापि शब्दस्याद्यार्थकतथाया पदविभागस्य पदसामान्यलक्षणाभिधानान्तरत्वानियमेन च नानुपपत्तिरिति ध्येयम् । नन्वेवमपि केवलयौगिकं पाचकादिपदमेव तच्च न किञ्चिद्धर्मे शक्तं तस्य वाक्यत्वादिति यौगिकस्य सामान्यलक्षणाऽनाक्रान्ततया तद्विभागो ऽनुपपन्न एवेति वाक्यशक्तौ पचधातूत्तराकप्रत्ययस्यैव पाचकपदरूपतया तस्य कर्तुरावश्यकतया पदत्वेन तद्विभागे बाधकाभावादिति भावः । एकस्यैव पदस्य एकस्मिन्नर्थे यौगिकत्वम् अन्यस्मिन्नर्थे रूढत्वं न सम्भवति उच्चारणभेदेन तद्भेदादिति सकृदुच्चरितन्यायाच्चेत्याशयेन । क्व चिदित्यस्य चिञ्चिदर्थकतामादाय क्व चिदितीति । ननु मूले मण्डपादिश्ब्दानां रूढमध्ये परिगणनमनुपपन्नम् । मण्डं पिबति रक्षतीति वा मण्डपमिति व्युत्पत्त्या तेषां मण्डपानकर्तृत्वार्थस्य सम्भवेन यौगिकरूढमध्यएव स्यादित्याह मण्डलादीत्यत्रेति ॥ तथा च वाचकं मण्डलपदमेव न तु मण्डपपदम् । तच्च न क्वापि यौगिकमिति न तस्य रूढमध्ये परिगणनाऽनुपपत्तिरिति भाव इति व्याचक्रुः । तत्र तस्य च नितरां योगरूढस्या-

पद्मं बोधयति। न च केवलया अवयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यं, रूढिज्ञानस्य केवलयौगिकार्थज्ञानप्रतिब-

---

त्वादिति । न च रूढिज्ञानस्य यौगिकार्थबुद्धौ प्रतिबन्धकत्वे पद्मेपि यो-

---

पि यौगिकत्वरूढत्वयोरर्थविशेषे सम्भवेन मण्डपपदस्य गृहविशेषे रूढतया रूढमध्ये परिगणनसम्भवात् । अत एव मूले यत्रावयवार्थ एव बुध्यते यद्यौगिकमित्येव लक्षणमुक्तन्तत्राऽवयवशक्तिनिरपेक्षया समुदायशक्त्या गृह्यते तद्रूढमित्येव रूढलक्षणमुक्तम् । तत्र यौगिकलक्षणे योगरूढे यौगिकत्ववारणाय एवकारः। न चैवमपि यौगिकरूढस्योद्भिदादिपदस्योद्भिदनकर्त्र्यर्थे यौगिकत्वं स्यादिति वाच्यम् । इष्टापत्तेः । रूढलक्षणेति । योगरूढवारणायैवाऽनपेक्षणत्वानन्तरं यौगिकरूढस्य उद्भिच्छब्दस्यापि यागविशेषार्थे रूढत्वमिष्टमेव । गृह्यतइत्यस्यार्थो बुध्यतइत्यर्थः । एवञ्च मण्डपपदस्य गृहरूपार्थे रूढत्वसम्भवेन न रूढमध्ये परिगणनानुपपत्तिरिति मन्तव्यम् । यत्रेत्यस्य यादृशानुपूर्व्यवच्छिन्नेत्यर्थकतया यौगिकरूढस्थले एकानुपूर्व्यवच्छिन्नस्यैव स्थलविशेषे अवयवार्थमात्रस्य बोधकत्वेन न तत्र रूढत्वानुपपत्तिरिति वाच्यम् । प्रयासगौरवात् । यौगिकरूढस्य यौगिकत्वे रूढत्वे च इष्टापत्तौ क्षतिविरहात् । यौगिकरूढभिन्नयोरपि केवलयौगिककेवलरूढयोरपि सत्त्वेन विभागव्याख्यानाभावात् । क्वचित्पाचकादिपदस्य सङ्केतितत्वसम्भवात् तेषामपि यौगिकत्वाऽनुपपत्तिः । रूढलक्षणे अवयवशक्तिरहितस्येत्युपेक्ष्य अवयवशक्तिनिरपेक्षस्येत्येतावत्पर्यन्तानुसरणवैयर्थ्यापाताच्चेति ध्येयम् । वस्तुतो दाक्षिणात्यामरकोशादौ मण्डपास्तु जले गृहइति पाठदर्शनात् * गौडास्तु जायाशब्दस्थाने मण्डपस्थाने मण्डपेत्येव प्रयुञ्जतइति गौडग्रन्थपरतया मुक्तावल्यां सहप्रसक्तं मण्डपशब्दमुपलभ्य ग्रन्थकृता तदभिहितमिति बोध्यम् । मूले अवयमशक्तिविषयइति ॥ अवयवशक्तिज्ञानजन्यशाब्दबोधविषयइत्यर्थः । समुदायशक्तिरप्यस्तीत्यस्य समुदायशक्तिस्मारितार्थविषयकत्वमप्यस्तीत्यर्थः । यथाश्रुते पाचकादिपदस्यापि योगरूढत्वापत्तेः । पाककर्त्तरि प्रयुक्तस्य एकादशे ऽहनि

न्धकत्वादिति प्राञ्चः । वस्तुतस्तु समुदायशक्त्युपस्थितपद्मे ऽवयवार्थपङ्कजनिकर्तुरन्वयो भवति सान्निध्यात् । यत्र तु रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणया कुमुदादेर्बो-

---

ग्यार्थस्य पङ्कजनिकर्तृत्वस्य बोधो न स्यादिति वाच्यम् । पद्मत्वावच्छिन्नवि-शेष्यत्वानिरूपितपङ्कजपदयोगजन्यपङ्कजनिकर्तृत्वावच्छिन्नविषयताशालिबो-धं प्रति रूढिज्ञानस्य प्रतिबन्धकत्वेन पद्मधर्मिकयोगार्थबुद्धेः प्रतिबध्यताव-च्छेदकानाक्रान्तत्वादिति । विरोधिविषयकज्ञानस्य प्रतिबन्धकत्वं जनकज्ञा-नविघटकत्वेनैवेति नियमभङ्गमस्वरसं प्राञ्च इत्यनेन सूचयन् मणिकारम-तमाह । वस्तुतस्त्विति । सान्निध्यादिति । रूढ्यर्थस्य सन्निहितोपस्थि-

---

पितृसङ्केतितपाचकपदस्याऽवयवशक्तिसत्त्वात् । अस्माकं पङ्कजपदादित एव प-द्मत्वावच्छिन्नपङ्कजनिकर्त्राद्यभेदेनान्वयबोधे अनादितात्पर्योपगमात् । पाचका-द्यभिन्नः पाचक इति शाब्दबोधस्य अनुदयेन तस्य योगरूढत्वापत्तिविरहादिति बोध्यम् । मूले स्यादिति ॥ कुमुदेति ॥ अवयवार्थमात्रस्य बाधितत्वेन तदर्थविष-यकबोधोदयात्तत्रापि पङ्कजपदप्रयोगसम्भवादिति भावलेशस्य समुदायशक्तिस्मारि-तार्थविषयकेत्यर्थः यौगिकार्थज्ञाने ऽप्यर्थेन चेत्याद्यायाः तत एवमाशङ्का मूलो-क्तकेवलपदानुपादाने एतस्याऽनुदयादिति सुधीभिर्विभावनीयम् । प्रतिबन्धकत्व-मिति ॥ प्रतिबन्धकत्वमित्यस्य विरोध्यविषयकज्ञानस्येत्यादिः । तेनानुमितौ परामर्शाविरोधिनो ऽपि बाधनिश्चयस्याऽनुमितिप्रतिबन्धकत्वे ऽपि नानियमानुपपत्ति-रिति ध्येयम् । सान्निध्यादिति । ननु मूले पद्मत्वावच्छिन्नस्य सन्निहितोपस्थि-तिविषयत्वेन तत्र पङ्कजनिकर्तृत्वे ऽवयवार्थस्यान्वय एव भवति न तूक्तप्रतिबन्धक-भावः प्रामाणिक इत्युक्तं तन्न सङ्गच्छते । कुमुदतात्पर्येणापि योगव्युत्पत्त्या पङ्क-जप्रयोगस्येष्टत्वेन तत्रापि पङ्कजनिकर्तृभिन्नं पद्ममिति बोधापत्तेः । न च पद्मत्वा-वच्छिन्नस्योपस्थितिविरहादेव नेयमापत्तिरिति वाच्यम् । पङ्कजेत्यस्य पद्मे स्मा-रकशक्तिसत्त्वात्ततः पद्मस्मरणस्यावश्यकत्वादिति आशङ्का निराबाधा सान्निध्या-

तिकत्वादित्यर्थः । व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमादिति भावः । व्यक्तिवचनानां किञ्चिद्व्यक्तितात्पर्यकाणां सन्निहितपदत्वमुपस्थितविशेषपरत्वमित्यर्थः । तथा च पद्मे तात्पर्यसत्त्वेन रूढ्यर्थयोगार्थयोः परस्परान्वयबोधजनकसामग्र्यन्तरसत्त्वेन च रूढ्यर्थएव योगार्थान्वयो न कुमुदादाविति न रूढिज्ञानस्य यौगिकार्थबुद्धौ प्रतिबन्धकत्वम् । एवं रूढ्यर्थयोगार्थयोः परस्परान्वयबोधसामग्रीस्थलएव न कुमुदादेः पङ्कजपदाद्बोधः । यत्र तु तयोः परस्परमन्वयबोधसमग्रीविरहस्तत्र कुमुदादेर्बोधो भवत्येव, परं तु कुमुदत्वेन रूपेण कुमुदत्वविशिष्टपङ्कजनिकर्तृत्वेन वा लक्षणया शुद्धपङ्कजनिकर्तृत्वेन तु शक्त्यैवेत्याह । यत्र तु रूढ्यर्थेत्यादिना । प्रतिसन्धीयतइत्यनन्तरं कुमुदत्वेन बोधे च तात्पर्यमिति पूरणीयम् । लक्षणयेति । पङ्कजनिकर्तृकुमुदत्वेन बोधो लक्षणयेत्यर्थः । रूढ्यर्थयोगार्थयोः परस्परसामग्रीविरहोपलक्षणमेतत् । तेन रूढ्यर्थबाधप्रतिसन्धानासत्त्वेपि

---

दित्यनेन तत्र पङ्कजपदस्य पद्मरूपार्थे तात्पर्यसत्त्वादित्येकमित्याह व्यक्तिवचनानामिति ॥ घटपटादिव्यक्तिवाचकानामित्यर्थः । जातिपरशब्दव्यावृत्त्यर्थं विशेषोपादानम् । सन्निहितपरत्वम्, अव्यवहितोपस्थितव्यक्तितात्पर्यकमित्यर्थः । अत एव घटमानयेत्युक्तौ सन्निधाने घटसत्त्वे न दूरस्थघटानयने लोकः प्रवर्ततइति भावः । तथा चोपस्थितपद्मत्वावच्छिन्नपरत्वे पङ्कजपदस्य तात्पर्यविषयाभूतस्य पङ्कजनिकर्तुः पद्मे ऽप्यभेदान्वयबोधयोग्यतासत्त्वात्तत्र भवति तादृशान्वयबोधः । यत्र तु कुमुदतात्पर्येणैव पङ्कजमस्तीति प्रयुज्यते तत्र पद्मे वृत्तित्वस्याऽबाधितत्वेन कुमुदे एव तात्पर्यनिश्चयसत्त्वात् तात्पर्यविषयस्य पङ्कजनिकर्तुः कुमुदस्य पद्मे भेदसत्त्वाद्योग्यताया विरहेण तत्र न तादृशान्वयबोध इति भावः । सत्येतद्देशरूढ्यर्थस्य पद्मस्य बाधनिश्चये ऽपि पद्मकुमुदातिरिक्तपङ्कजनिकर्तृपदार्थतात्पर्येण पङ्कजनिकर्तृत्वमात्रतात्पर्येण वा कुमुदस्यैव बोधे तात्पर्यं तत्र लक्षणया कुमुदबोधाभावात्तद्ग्रन्थासङ्गतिरित्यतः पूरयति कुमुदत्वेनेति ॥ तेनेति ॥ बाधः प्रतिसन्धीयतइत्यस्य सामग्रीविरहत्वोपलक्षणत्वेनेत्यर्थः । सामग्र्यन्तरेति ॥ प्रामादिको

धः। यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्र चावयवशक्तिमात्रेण निर्वाह इत्याहुः। यत्र तु स्थलपद्मादावयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः।यदि तु यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम् यथोद्भिदादिपदम्। तत्र हि उद्भेदनकर्ता तरुगुल्मादिरपि बुध्यते यागविशेषोपीति ॥ ८१ ॥

---

यत्र सामग्र्यन्तरविरहस्तत्रापि लक्षणया कुमुदादेर्बोधो भवत्येव। अवयवशक्तिमात्रेणेति। मात्रपदेन लक्षणानादरः सूचितः। निर्वाहः, पङ्कजनिकर्तृत्वेन कुमुदशाब्दबोधनिर्वाह इत्यर्थः। पद्मत्वेन बोधः, पद्मत्वेनैव बोधः। लक्षणयैवेति। रूढ्यर्थतावच्छेदकपद्मत्वजातेस्तत्राभावेन रूढ्या तद्बोधनासम्भवादिति भावः ॥ ८१ ॥

---

ऽयं पाठः। कारणविरहेत्येव वक्तुमुचितत्वात्। सामग्रीपदं सामग्रीघटककारणमात्रपरं द्रष्टव्यम्। तच्चकारणं रूढ्यर्थस्मरणादिकमेवेति ध्येयम्। ननु योगरूढस्थले पङ्कजनिकर्तृभिन्नं पद्ममिति बोधस्योपगम एवोचितः सकृदुच्चरित इति न्यायविरोधादत एव यौगिकरूढस्थले एकार्थबोध इति चेन्न। एकपदोपस्थाप्ययोगरूढ्यर्थयोर्भेदेनान्वयबोधे आकाङ्क्षावैचित्र्यस्यैव योगरूढस्थले तादृशव्युत्पत्तिसङ्कोचस्यावश्यकत्वादिति भावः। मूले यत्र त्विति ॥ यादृशैकानुपूर्व्यवच्छिन्ने इत्यर्थः। तेनोच्चारणभेदेन उद्भित्पदस्य भेदे ऽपि न क्षतिः। उच्चरित इति शेषः पूरणीयः। स्वातन्त्र्येणेति ॥ अर्थान्तरमविषयीकृत्येत्यर्थः। इदञ्च योगरूढव्यावृत्त्यर्थमुक्तम्। मूले यागविशेषो ऽपीति ॥ उद्भिदा यजेत पशुकाम इत्यादावित्यर्थः। तेनोच्चारणभेदेन उद्भिदस्तरुगुल्माद्या इत्यादौ तत्र गुल्माद्या ऊर्ध्वभेदनकर्त्तार इति बोधस्तत इति भावः ॥ ८१ ॥

**लक्षणा शक्यसम्बन्ध-**
**स्तत्पर्यानुपपत्तितः ।**
**आसत्तिर्योग्यताकाङ्क्षा-**
**तात्पर्यज्ञानमिष्यते ॥ ८२ ॥**

लक्षणा शक्यसंबन्ध इति । गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोध इति । सा च शक्यसम्बन्धरूपा । तथा हि प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात् तीरस्य स्मरणम् ततः शाब्दबोधः, परं तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं

---

लक्षणा द्विविधा जहत्स्वार्थाऽजहत्स्वार्था च, तत्राद्यां प्रदर्शयति गङ्गायामिति। वक्ष्यमाणास्वरसादाह तात्पर्यानुपपत्तिर्वेति। सा च,लक्षणा च। द्वितीयां

---

जहत्स्वार्थेति ॥ जहत्स्वार्थं ययेति व्युत्पत्त्या शब्दार्थविषयकशाब्दबोधजनकगङ्गापदादेस्तीरादौ लक्षणा । अत्र स्वपदं लक्षकत्वेनाऽभिमतार्थपरम् । एवमग्रे ऽपि बोध्यम् । एवमेव न जहत्स्वार्थं ययेति व्युत्पत्त्या अजहत्स्वार्थच्छत्र्यादिपदस्य छत्रिघटितस्य एकसमुदायत्वेन छत्रिपदजन्यबोधजनिका छत्रिघटितैकसमुदायत्वावच्छिन्ने लक्षणेत्यर्थः । आद्यामिति ॥ जहत्स्वार्थामित्यर्थः । वक्ष्यमाणास्वरसादिति ॥ अन्वयानुपपत्तेर्लक्षणाबीजत्वे यष्टीः प्रवेशयेत्यादौ यष्टिधरे ल-

स्यात्तदायष्टीः प्रवेशयेत्यादौ लक्षणा न स्यात् यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात् तेन तत्प्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरेषु लक्षणा। एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात्। एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वे लक्षणा, इयमेवाजहत्स्वार्था लक्षणेत्युच्यते। एकसार्थवाहित्वेन रूपेण छत्रितदन्ययोर्बोधात्। यदि चान्वया-

---

प्रदर्शयति एवंकाकेभ्य इति।दध्युपघातके,काकबिडालादिसाधारणदध्युपघातकत्वविशिष्टे।एकसार्थवाहित्वे, एकसार्थवाहित्वविशिष्टे।छत्रिपदलक्षणाभिधानं

---

क्षणानुपपत्तिरूपास्वरसादित्यर्थः। समुदायत्वं तद्विषयकबुद्धिविषयत्वरूपम्। तद्वाहित्वेन तद्वत्त्वेनेत्यर्थः। तृतीयार्थो ऽवच्छिन्नत्वं तस्य च लक्षणापदार्थे लक्षणतायामन्वयो बोध्यः। मूले इयमेवेति॥ काकपदस्य दध्युपघातके छत्रिपदस्य छत्रिघटितसमुदाये लक्षणैव चेत्यर्थः। क्वचिन्मूले एकसार्थवाहित्वे लक्षणेति पाठो दृश्यते तदभिप्रायेण व्याचष्टे एकसार्थवाहित्वविशिष्टेइति॥ ननु छत्रीत्यस्य मूलोक्तलक्षणा न सङ्गच्छते। छत्रमस्यास्तीत्यर्थे छत्रपदोत्तरं ताद्धितेन प्रत्ययेनैव छत्रीत्यस्य निष्पन्नतया प्रकृतिप्रत्ययसमुदायरूपत्वेन तस्य वाक्यत्वाद्वाक्ये च शक्तिविरहेण लक्षणाया अप्यसम्भवादित्यत आह छत्रीत्यादि॥ वाक्यलक्षणावादिमतेति॥ वैयाकरणैः राजपुरुषादिसमासस्य राजस्वत्ववत्पुरुषे पाचकच्छत्र्यादिपदस्य पाककर्तृच्छत्रसम्बन्ध्यादौ शक्तेरङ्गीकारादिति भावः। ननु नेदं मदं विचारसहम्। समासे राजपदस्य राजसम्बन्धिनि लक्षणया राजपदस्य पुरुषे शक्तौ च राजसम्बन्ध्यभिन्नः पुरुष इति बोधोपपत्तौ समासे स्वतन्त्रशक्तिकल्पेन छत्र्यादौ च छत्रार्थकच्छत्रसम्बन्ध्यर्थकल्पने च बीजाभावात्। अन्यथा

च वाक्यलक्षणावादिमताभिप्रायेणान्यायमते तु छत्रपदस्यैवैकसार्थवाहित्वे लक्षणा प्रत्ययार्थश्च सम्बन्धी तथा चैकसार्थवन्तो गच्छन्तीत्यन्वयः । एकसार्थवाहित्वं चैकसार्थ एव न त्वेकसार्थगन्तृत्वं नैराकाङ्क्ष्येण यान्तीत्यस्यानन्व-

---

निरर्थकनानाशक्तिकल्पनागौरवप्रसङ्गात् तत्र समासादौ शक्तिस्वीकार आवश्यकः । अन्यथा ऋद्धस्य राजमातङ्गा इत्यादिप्रयोगापत्तेः । तत्र राजमातङ्गपदार्थतावच्छेदकराजन्यभेदेन ऋद्धपदार्थस्यान्वयो न सम्भवति पदार्थः पदार्थेनान्वेति न तु पदार्थतावच्छेदकेनेति नियमात् । राजपदस्यैव राजार्थकत्वे तु तत्र ऋद्धपदस्य भेदेनान्वये न किञ्चिद्बाधकमिति तादृशप्रयोगो दुर्वार इति वाच्यम् । राजपदस्य राजसम्बन्धिलक्षकतया राज्ञः पदार्थतावच्छेदकत्वात् । छत्रीत्यादौ छत्रादौ पदार्थान्तरस्यान्वयबोधात् । वस्तुयुक्तस्य न विशेषणयोगो युक्तस्य न वृत्तिरिति समासकृत्तद्धितादिरूपवृत्त्यैकदेशार्थकपदार्थान्तरेणान्वयरूपयुक्त्यन्तरादेवेत्यस्वरसादाह यन्यामते त्विति ॥ वस्तुतः वृत्त्यैकदेशार्थव्युदासनादौ चैत्रस्य करणत्वादिरूपपदार्थान्तरस्य भेदसम्बन्धेन चैत्रस्य दासभार्य इत्यादौ शरैः शातितपत्र इत्यादौ अन्वयबोधदर्शनात् अभेदसम्बन्धेन तत्र पदार्थान्तरान्वयो व्युत्पन्न इति अवश्यम् अङ्गीकरणीयम् । तथा चाभेदेनान्वय प्रयोजकसमानविभक्तिकपदोपस्थाप्यत्वाभावाद्भेदेनान्वयबोधवारणसम्भवे वृत्तस्येत्यादि व्युत्पत्त्यङ्गीकारे ऽपि न क्षतिः । न चैवन्तस्य पितेत्यादौ पितृपदर्थतावच्छेदकघटकजनकत्वे निरूपितत्वस्य षष्ठ्यर्थस्यान्वयदर्शनात् पदार्थतावच्छेदके ऽपि भेदेनैव पदार्थान्तरस्यान्वयो व्युत्पन्न इत्यवश्यम् अङ्गीकरणीयम् । तथाविधान्वयबोधस्य च समानविभक्तिकपदोपस्थाप्यत्वाद्वारणसम्भवे पदार्थः पदार्थेनान्वेतीत्यादिव्युत्पत्तिकल्पनमपि नावश्यकमिति वाच्यम् । तथा सति गवि पशुर्गौरित्यादितः गोवृत्तिलोमलाङ्गूलवान् गौरित्यादिबोधापत्तिः । चैत्रस्य पितेत्यादौ तु ससम्बन्धकपदशक्यतावच्छेदके ऽपि पदार्थान्तरान्वयस्य व्युत्पन्नतया बोधानुपपत्तिः । ससम्बन्धिकञ्च पदमाकाङ्क्षोत्थापकमवधेयम् । एकसार्थवाहित्वमिति ॥ एक समुदाय एवेत्यर्थः । नैराकाङ्क्ष्येणेति ॥ उद्देश्यता-

नुपपत्तिर्लक्षणाबीजं स्यात् तदा क चिद् गङ्गापदस्य तीरे क चिद् घोषपदस्य मत्स्यादौ लक्षणेति नियमो न स्यात् । इदं तु बोध्यम् । शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः, यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् । अत एव लक्ष्यतावच्छेदके न लक्षणा, तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपप-

---

त्तेः । न चाऽजहत्स्वार्थतोक्तिर्विरुद्धेति वाच्यम् । वाक्यलक्षणावादिमतेनैव तदभिधानादिति । क चिद्गङ्गापदस्य तीरे तात्पर्यग्रहस्थले क चिद् घोषपदस्य मत्स्यादौ तात्पर्यग्रहस्थले । तेनैव रूपेणेति । न च गङ्गायामित्यादौ गङ्गातीरत्वेन बोधे जहत्स्वार्थत्वहानिरिति वाच्यम् । तीरत्वेन लक्षणायामे-

---

वच्छेदकविधेययोरैक्ये अभेदेनान्वयस्याव्युत्पन्नतया गमनकर्तृत्वविशिष्टे गमनस्यान्वयबोधे आकाङ्क्षाविरहादिति भावः । छत्रिपदस्य छत्रिघटितसमुदायलक्ष्यतजन्यशाब्दबोधे छत्ररूपमुख्यार्थस्य मुख्यविशेष्यतया भानाभावादिति ध्येयम् । वाक्यलक्षणेति ॥ एतच्चापातत एव समाधानम् । वस्तुतः स्वजन्यबोधे शक्यार्थस्य विशेषणतया भाने ऽपि नाजहत्स्वार्थताभङ्गः । यादृशलक्षणयाशक्यार्थस्य कथञ्चिदपि न बोधः तस्या एवाजहत्स्वार्थत्वादत एव गङ्गापदस्य यत्र गङ्गातीरत्वेन लक्षणा साऽजहत्स्वार्था यत्र तु तीरत्वेन लक्षणा तत्रैव जहत्स्वार्था । न्यायमते ऽपि छत्रीत्यादौ अजहत्स्वार्थलक्षणोपपादनमिति ध्येयम् । तीरत्वेनेति ॥ इदमपि पूर्वोक्तिविरुद्धमेव । छत्रिघटितसमुदायलक्षणाच्छत्रिपदस्य विशेषणतया छत्रबोधकत्वेन तत्राप्यजहत्स्वार्थलक्षणोपपादनमिति १ ध्येयम् । न च केवलसमुदायत्वेन यत्र छत्रपदस्य लक्षणा तत्रैव जहत्स्वार्थत्वविरोधो न चेत्यादिना पूर्वमाश-

---

१ तस्यामप्यजहत्स्वार्थत्वसम्भवादिति २ पु० पा० ।

त्तेः। परं त्वेवंक्रमेण शक्यतावच्छेदकेपि शक्तिर्न स्यात्, तत्प्रकारकशक्यार्थस्मरणं प्रति तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम् । यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते यथा द्विरेफादि-

---

व जहत्स्वार्थत्वस्य सर्वसम्मतत्वात्। गङ्गातीरत्वेन भाने त्वजहत्स्वार्थैव लक्षणेति । एवं पूर्वोक्तस्थले यष्टीः प्रवेशय मञ्चाः क्रोशन्तीत्यादावपि याष्टिधरत्वमञ्चस्थत्वादिना बोधे ऽजहत्स्वार्थैव लक्षणेति ध्येयम् । अत एव, तद्धर्मविशिष्टे लक्षणाग्रहस्य तेन रूपेणोपस्थितिशाब्दबोधौ प्रति हेतुत्वादेव । एवं च पदाऽनुपस्थाप्यस्यापि लक्ष्यतावच्छेदकस्य शाब्दे भानं सुकरम् अतिप्रसङ्गस्य तद्धर्मविशिष्टेत्यादिनैव वारणादिति भावः । इदमुपलक्षणं, गङ्गापदशक्यप्रवाहसम्बन्धस्य तीरत्वे बाधादित्यपि द्रष्टव्यम् । लक्षितलक्षणाया आधिक्यमाशङ्क्य जहत्स्वार्थायामन्तर्भावमाह । यत्र त्विति ।

---

क्षित इति न पूर्वोक्तग्रन्थविरोध इति वाच्यम् । एवमपि यत्र छत्रिघटितसमुदायत्वेन लक्षणा तत्रैव जहत्स्वार्थत्वोपपत्तेरिति समाधानस्यैव कार्यत्वाद्वाक्यलक्षणावादिमताभिप्रायेण जहत्स्वार्थत्वोपपादनस्यानौचित्यादत एव ग्रन्थकृतैव यत्र तीरत्वेन गङ्गापदस्य लक्षणा तत्रैव गङ्गापदस्य जहत्स्वार्थलक्षणायाः सर्वसंमतत्वादिति वक्ष्यते तत्र हि सर्वपदमाहिम्ना गङ्गातीरत्वेन लक्षणायामपि जहत्स्वार्थत्वस्य न केषांचिदनुमतत्वं लक्ष्यते तस्य शक्यार्थस्य पदार्थान्तरेण साकं यत्रान्वयबोधः तत्रै वाजहत्स्वार्थत्वमिति तदभिप्रायेणैव घटितमिति मन्तव्यम् । अतिप्रसङ्गस्येति ॥ कृत्पदजन्योपाधिविषयस्यापि शाब्दबोधे भानोपगमे घटादिपदाद्धटविषयक इति नियमोपगमेनैव घटत्वावच्छिन्नविशेष्यकशक्यसम्बन्धग्रहः, तद्धर्मावच्छिन्नविशेष्यकमेव पदार्थस्मरणं शाब्दबोध इति नियमोपगमेन घटादिविषयान्न पटादिविषयकशाब्दबोधापत्तिरिति भावः । प्रवाहसम्बन्धस्येति ॥ तथा च शक्यसम्बन्धरूपलक्षणा-

पदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्ब-

---

परम्परासम्बन्धरूपेति । स्ववाच्यरेफद्वयघटितपदवाच्यत्वादिरूपा । न च

---

या लक्ष्यतावच्छेदके तीरत्वे ऽभावादित्यपि लक्ष्यतावच्छेदके लक्षणेति भावः । यद्यपि तीरत्वे ऽपि संयुक्तसमवायरूपसम्बन्धो ऽस्त्येव तथापि युगपद्वृत्तिद्वयविरोधेन शक्तिद्वये लक्षणाद्वयकल्पनापि एकपदार्थद्वये शाब्दबोधस्यानुपगमेनैकपदात्तीरपूरद्वये बोधानुपपत्तिरिति ग्रन्थकृतां तात्पर्यम् । गङ्गायां घोषमध्यास्तइत्यादिप्रयोगस्य प्रामाण्योपगमे वसतीत्येव वृत्तिद्वयेनैव युगपन्नानार्थविषयकशाब्दबोध इत्यवधेयम् । अत उक्तस्थले गङ्गापदादेव तीरप्रवाहयोर्बोधे न क्षतिरिति मन्तव्यम् । मूले परं त्वित्यादि ॥ अत्रेदमवधेयम् । शक्यतावच्छेदके शक्तिस्वीकारे पृथिवीपदात् कदा चिदष्टद्रव्यातिरिक्तद्रव्यत्वेन कदा चिद्गन्धवत्त्वेन कदा चित्पृथिवीत्वेन च शाब्दबोधापत्तिः ।पृथिवी पृथिवीपदशक्येतिवदष्टद्रव्यातिरिक्तद्रव्यं गन्धवत्त्वात्पृथिवीपदशक्यमित्याकारकस्य शक्तिज्ञानस्य सम्भवात्तीरं गङ्गातीरं वा प्रवाहसंयोगवदिति लक्षणाग्रहणे शक्तिग्रहस्य तुल्ययोगक्षेमत्वात् । तथा च लक्षणया यत्किञ्चिदेकधर्मावच्छिन्नविषयक एव शाब्दबोध इति यथा नियमस्तथा शक्त्यबोधे ऽपि नियमो न स्यात् । शक्यतावच्छेदके शक्तिस्वीकारे तु पृथिवीपदात्पृथिवीत्वेनैव शाब्दबोध इति नियम उपपद्यते । पृथिवीपदस्य पृथिवीत्वपृथिव्योरेव शक्ततया शक्यार्थस्यैव शाब्दबोधे भानमिति नियमेन च तदुपपादनसम्भवात् । लक्षणया चान्यस्यापि शाब्दबोधे भानोपगमेन लक्षणया कदा चित् तीरत्वेन कदा चित् गङ्गातीरत्वेन शाब्दबोधो भवत्येव । इदमत्र पुनश्चिन्त्यम् । धर्मितावच्छेदके शक्यतावच्छेदकत्वावगाहिशक्तिज्ञानत्वमेव शाब्दबोधहेतुरुपेयते । शक्यतावच्छेदकञ्च सर्वलक्ष्यन्यूनाऽनतिरिक्तवृत्तिधर्मः सम्भवति । लघोः शब्दस्वरूपावच्छेदकत्वे मानाभावः । तीरं प्रवाहसम्बन्धवदितिवद्गङ्गातीरं प्रवाहसङ्गीति वृत्तेरेव सर्वजनानुभवसिद्धत्वात् । पृथिवी पृथिवीपदशक्येति बोधस्येवाष्टद्रव्यातिरिक्तद्रव्यं तथेत्यादिशक्तिज्ञानस्य सर्वसम्मतत्वात् शक्तिवृत्तीनां स्वरूपसम्बन्धरूपाव-

न्धो भ्रमरे ज्ञायते तत्र लक्षितलक्षणा। किं तु लाक्षणिकं पदं-नानुभावकम्, लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्। शक्तिलक्षणान्यतरसम्बन्धेनेतरपदार्थान्वितस्वशक्यार्थ-शाब्दबोधं प्रति पदानां सामर्थ्यावधारणात्, वाक्ये तु शक्तेर-

---

द्वौ रेफौ यत्रेति व्युत्पत्त्या द्विरेफपदेन स्वशक्यरेफद्वयसम्बन्धिभ्रमरपदं लक्ष्यते भ्रमरपदेन च शक्त्या भ्रमरः कल्प्यतइत्येतावतैव सामाञ्जस्येऽलं द्विरेफपदस्य भ्रमरे परम्परासम्बन्धरूपलक्षणया। एवं च लक्षितेन लक्षणाज्ञापनमिति लक्षितलक्षणाशब्दार्थोऽप्यस्त्विति वाच्यम् । तथा सति द्विरेफमानयेत्यादितः कर्मत्वादौ भ्रमरपदार्थान्वयानुपपत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादिति । ननु तच्छाब्दबोधे तच्छक्तपदज्ञानत्वेन हेतुत्वाल्लाक्षणिकशाब्दबोधः कथं स्यादित्यत आह । किं त्विति। पदान्तरं समभिव्याहृतं शक्तं पदम् । शक्तिलक्षणेति । अन्यतरसम्बन्धेन य इतरपदार्थस्तदन्वितो यः स्वार्थः । कुमतिः पशुरित्यादिसर्वलाक्षणिकस्थले शाब्दबोधस्यानुभवसिद्धतया लाक्षणिकार्थस्याप्यानुभावकत्वमि-

---

च्छेदकत्वावगाहित्वसिद्ध्या शक्ते तथाविधावच्छेदकत्वं प्रामाणिकमेव । घटो नास्तीत्यादिप्रतीतौ घटत्वस्यैव प्रतियोगितावच्छेदकत्वम् । इत्थञ्च शक्यतावच्छेदके शक्तिविरहे ऽपि पृथिवीपदशक्तिप्रमायाः पृथिवीत्वप्रकारकशाब्दबोधः, शक्तिभ्रमे तु गन्धवत्त्वादिनापि शाब्दबोध इति । अत एव भ्रान्तस्य गन्धवत्त्वावच्छेदेनापि शक्तिज्ञानसम्भवादिति परैरपरिशीलितः पन्थाः। कल्प्यतइति ॥ उपस्थाप्यतइत्यर्थः । अवयवशक्त्या द्विरेफपदात् साक्षात्सम्बन्धरूपनिरूढलक्षणासहकृततया भ्रमरपदबोधनिर्वाहे शक्यस्य परम्परासम्बन्धरूपलक्षितलक्षणास्वीकारो ऽनुचित इति भावः । नन्वेवं द्विरेफपदे लक्षितलक्षणेति सर्वसिद्धप्रवादस्य का गतिरित्यत आह लक्षितेनेति ॥ द्विरेफपदलक्षितेन भ्रमरपदेन लक्षणं शाब्दबो-

भावात् शक्यसम्बन्धरूपा लक्षणापि नास्ति यत्र गभीरायां नद्यां घोष इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा गभी-रपदार्थस्य नद्या सहाभेदेनान्वयः क्व चिदेकदेशान्वयस्यापि स्वीकृतत्वात् । यदि तत्रैकदेशान्वयो न स्वीक्रियेत तदा नदीपदस्य गभीरनदीतीरे लक्षणा गभीरपदं तात्प-

---

ति नद्याः । ननु शक्यसम्बन्धो न लक्षणा, तथा सति वाक्यस्य शक्या-प्रसिद्ध्या तत्र लक्षणा न स्यादिति मीमांसकाक्षेपमिष्टापत्त्या निराकुरुते वाक्ये त्विति । ननु गभीरायां नद्यां घोष इत्यादौ नदीपदस्य नदी-तीरे लक्षणास्वीकारे गभीरपदार्थस्यैकदेशान्वयापत्त्या पदलक्षणाया अस-म्भवेन वाक्यलक्षणावश्यकीत्यत आह । यत्र गभीरेति । क्व चिदिति । चैत्रस्य गुरुकुलमित्यादावित्यर्थः । स्वीकृतत्वादिति । पदभेदेन व्युत्पत्ति-भेदात् प्रकृते तथाव्युत्पत्त्यकल्पनादिति भावः । नदीपदस्येति । न च विनिगमनाविरहेण गभीरपदस्य लक्षणा नदीपदं तात्पर्यग्राहकमित्यस्या-पि वक्तुं शक्यत्वात् कथं नदीपदमात्रे लक्षणाभिधानमिति वाच्यम् । प्रत्य-

---

यरूपं ज्ञानम् । आकारान्तप्रयोगस्तु वासनैव क्रियते श्रवणान्तरेत्यादिति ! भा-वः । प्रत्ययानामिति ॥ यस्मात्प्रत्ययो विधीयते सा प्रकृतिः तदर्थेन प्रत्युत तज्जन्योपस्थितिविषयो यः तदन्वितस्वार्थबोधकत्वादित्यर्थः । प्रत्ययाश्च विभ-क्तिकृत्तद्धिताख्याताः । तथा च द्विरेफपदेन भ्रमरपदमेव न तु तदर्थ इति कथं तत्र विभक्त्यर्थकर्मत्वान्वय इत्यनुपपत्तिः स्यादतः शक्यस्य रेफद्वयस्य घटितपद-वाच्यत्वरूपपरम्परासम्बन्धादेकया लक्षितलक्षणया द्विरेफपदाद् भ्रमरोपस्थित्यर्थं तादृशस्वीकार आवश्यक इति भावः । मूले नानुभावकमिति ॥ शब्दानुभवजनि-का नेत्यर्थः । तथा च लाक्षणिके पदे स्मारिका शक्तिरेव नानुभाविकीति भा-

यानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरुत्तरपदएव लक्षणाया उक्तत्वात् । अत्र मीमांसकमतानुयायिनः । वाक्यलक्षणयैवोपपत्तौ गभीरपदस्य तात्पर्यग्राहकत्वकल्पनमयुक्तम् । न च वाक्ये शक्त्यभावात् शक्यसम्बन्धरूपा लक्षणापि न सम्भवतीति वाच्यम् । स्वबोध्यसम्बन्धस्यैव लक्षणापदार्थत्वात् गङ्गायां घोष इत्यादौ गङ्गापदबोध्यस्य प्रवाहस्य सम्बन्धस्तीरे इति तत्र लक्षणा गभीरायां नद्यामिति वाक्यस्य बोध्या गभीराभिन्ना नदी तत्सम्बन्धस्तीरे इति वाक्येपि लक्षणा । एवं समासात्मके

---

वः । ननु तर्हि लाक्षणिकार्थस्य कथं शाब्दबोधे भानमित्याशङ्क्य लाक्षणिकपदसमभिव्याहृतशक्तपदान्तरमेव लाक्षिणिकार्थान्वितस्वार्थशाब्दबोधम्प्रति कारणमिति शक्तपदान्तरएव शाब्दबोधे लाक्षणिकार्थस्यापि भानमिति समाधत्ते लाक्षणिकार्थस्येति ॥ सामर्थ्यावधारणात् शक्त्यवधारणादित्यर्थः । मूलस्थपदान्तरमित्यस्य लाक्षणिकशाब्दबोधजनकत्वं प्रतीयते तच्चायुक्तं गङ्गायां घोष इत्यत्र घोषपदस्यैव तीरशाब्दबोधजनकतायाः सर्वानुभवसिद्धत्वादतो व्याचष्टे पदार्थान्तरामिति॥समभिव्याहृतामिति ॥ लाक्षणिकपदसमभिव्याहृतमित्यर्थः । तथा च लाक्षणिकपदसमभिव्याहृतशक्तपदस्मारितलक्ष्यार्थविषयकशाब्दबोधजनकमिति भावः । इतरपदार्थइति ॥ इतरपदजन्यस्मृतिविषय इत्यर्थः । तत्र परपदे तृतीयार्थस्य स्वविषयकज्ञानसहिते वैशिष्ट्यपरस्य वाऽन्वयः । कुमतिरिति ॥ कुत्सिता मतिर्यस्य स कुमतिरिति बोधः । इतरपदस्य कुत्सितज्ञानवल्लाक्षणिकतया पूर्वपदस्य तात्पर्यग्राहकतया निरर्थकतया कुत्सितपशुत्वस्य बाधितत्वेन पशुपदस्यापि पशुपदलाक्षणिकतया कुमतिः पशुरित्यत्र कस्यापि शक्तपदस्याभावात् तत्र शाब्दबोधो न स्यादिति शाब्दबोधोपपत्तये लाक्षणिकपदे ऽपि आनुभाविकी शक्तिरवश्यमङ्गीकरणीयेति भावः । गुरुकुलमित्यादि ॥ कुलमिति सम्पातायातम् । चैत्रस्य गुरुरित्यत्रापि गुरुत्ववच्चैत्रनिरूपितत्वस्यान्वयात् । न च गुरावेव चैत्रसम्बन्धः इति वाच्यम् । तथा सति चैत्रपुत्रादावपि तथा प्रयोगप्रसङ्गात् । चैत्रपुत्रस्य कस्य चिद् गुरुत्वाच्चैत्रसम्बन्धित्वाच्चेति ध्येयम् । ननु गुर्वादिपदस्य ससम्बन्धिकत्वेन तदर्थैकदेशे

चित्रगुरिति वाक्येपि चित्रगुपदस्यावयवशक्त्या चित्राभिन्ना गौः स्वबोध्या
स्वजन्यबोधविषयस्यैव स्वबोध्यत्वात् तत्सम्बन्धस्य स्वामिनि सत्त्वादित्या-
हुः । तन्न । स्वबोध्यत्वं हि न स्वजन्यबोधविषयत्वम् गङ्गायां घोष इत्यादौ ग-
ङ्गायामित्यस्यापि लाक्षणिकत्वापत्तेरतस्तत्त्वेन बोधकत्वं वाच्यम् । न चै-
तावतापि निर्वाहः, अपभ्रंशस्यापि लाक्षणिकत्वापत्तेरतस्तत्त्वावच्छिन्ना या

---

पदार्थान्तराऽन्वयसम्भवे ऽपि नदीपदस्याऽतथात्वात् कथं तदेकदेशे गभीरपदार्थान्त-
रइत्यत आह पदभेदेनेति ॥ व्युत्पत्तिभेदात्, आकाङ्क्षाभेदात् । प्रकृतइति ॥ ए-
तद्वाक्यस्थनदीपदइत्यर्थः ॥ उत्तरपदएवेति । यद्यपि गभीरायां नद्यां घोष इ-
त्यस्य पूर्वमुदाहृतत्वेन तत्र गभीरपदोत्तरमपि सप्तमी श्रूयते येनेयमनुपपत्तिस्तस्या-
पि विशेषणविभक्तेः सर्वत्र निरर्थकत्वेन तस्याः सार्थकत्वोपगमस्याऽयुक्तत्वात् । घोष-
पदेन गभीरायामित्यस्यासन्नत्वाच्छाब्दबोधानुपपत्तेश्च गभीरायां घोष इत्यादौ
सर्वथा ऽनुपपत्तेश्च न तथोपगमसम्भव इति भावः । गङ्गापदजन्यबोधे ऽपि गङ्गा-
पदशक्यार्थस्मरणरूपेइत्यर्थः । वाक्यजन्यबोधस्तु शाब्दबोधरूप एवेति भावः ।
गङ्गायामित्यस्यापि गङ्गायां घोष इत्यत्र गङ्गापदएव लक्षणा सर्वानुमता ।
गङ्गायामिति वाक्ये पदलक्षणायामनुपपत्तेरभावात् गङ्गायामिति वाक्यजन्यस्यापि ग-
ङ्गातीरवृत्तिरिति शाब्दबोधस्य गङ्गाविषयकत्वात्तत्सम्बन्धस्य तीरे सत्त्वात् तादृशवा-
क्यस्यापि तीरे लाक्षणिकत्वादिति भावः । इदञ्च गङ्गातीरत्वेन शक्यसम्बन्धप्र-
वाहमभिप्रेत्योक्तम् । तीरत्वेन तथात्वे तु प्रवाहस्य न वाक्यजन्यबोधविषयत्वमि-
त्यवधेयम् । यादृशानुपूर्व्यवच्छिन्नजनकतानिरूपितजन्यताशालिबोधे विषयतासम्ब-
न्धस्तादृशानुपूर्व्यच्छिन्नलक्षणा वाच्येति भावः । एवं गङ्गायामित्यानुपूर्व्यवच्छिन्न-
शाब्दबोधजनकतावच्छेदकामिति न वाक्यलक्षणापत्तिः । यद्यपि गङ्गातीरवृत्ति-
रित्याकारकशाब्दबोधं प्रति आङ्क्षाज्ञानाविधया गङ्गापदोत्तरसप्तमीरूपसमभिव्या-
हारज्ञानस्य कारणत्वमावश्यकम्, अन्यथा सप्तम्युत्तरे गङ्गापदज्ञाने तादृशशा-
ब्दबोधापत्तिः, तथापि तादृशानुपूर्व्यवच्छिन्नविषयकज्ञानमेव शाब्दबोधजनकं न
तु तादृशानुपूर्व्यवच्छिन्नमेवेति नेदानीं वाक्यलाक्षणिकत्वापत्तिरिति भावः । न चैवं

शक्त्यवच्छिन्ना बोधकता सैव निवेश्या तथा च कथं वाक्यस्य लक्षकत्वम् । वस्तुतस्तु स्वबोध्यत्वं यदि स्वजन्यशाब्दबोधविषयत्वं तदा गङ्गायां घोष इत्यादौ गङ्गापदे लक्षणानुपपत्तिः गङ्गापदेन तत्र प्रवाहशाब्दबोधाजननेन प्रवाहस्य गङ्गापदबोध्यत्वाभावात् किं तु शक्त्या स्वजन्यज्ञानविषयत्वं तद्वाच्यम् । न च शक्त्येत्यधिकम् । समवायेन घटपदस्मारिताकाशस्यापि स्वबोध्यत्वापत्त्या तत्सम्बन्धज्ञानाद् घटपदेन पटादेः शाब्दबोधप्रसङ्गात् । एवं च शक्यसम्बन्धापेक्षया शक्त्या स्वबोध्यसम्बन्धस्य गुरुत्वान्न तस्य लक्षणात्वमिति । किं च गभीरायां नद्यामिति सप्तम्यन्तस्य गभीरनदीतीरलक्षकत्वे घोषे तादृशतीराधेयताबोधानुपपत्तिः आधेयताबोधकपदाभावात्

---

पदज्ञानमेव शाब्दबोधकारणं न तु पदमिति पदानुपूर्व्यवच्छिन्नजनकतानिरूपितजन्यताशालिबोधाप्रसिद्ध्या पदस्यापि लाक्षणिकत्वानुपपत्तिरिति वाच्यम् । ज्ञायमानपदस्य करणत्वाभिप्रायेणैतदभिधानात् । ननु मौनिश्लोकादौ पदाभावे ऽपि शाब्दबोधोत्पत्त्या मतमिदं न विचारसहमिति तादृशानुपूर्व्यवच्छिन्नस्य लक्षणेत्यवश्यमङ्गीकरणीयम् । तथा चागतमेव चावयवस्य लाक्षणिकत्वमित्यत आह न चैतावतेति ॥ तत्त्वावच्छिन्नेति ॥ तत्त्वं तादृशानुपूर्व्यवच्छिन्नत्वान्निष्ठावच्छेदकतानिरूपितशक्त्यवच्छिन्नविषयतासम्बन्धावच्छिन्नशक्तिनिष्ठावच्छेदकताकज्ञाननिष्ठजनकतायामेवेत्यर्थः । तथा च तादृशानुपूर्व्यवच्छिन्नशक्तिज्ञानजन्यबोधविषयतासम्बन्धस्तदानुपूर्व्यवच्छिन्नस्य लक्षणेति वाक्यपर्यवसानात् वाक्यस्य च शक्त्यभावात् तस्य लक्षकत्वाऽसम्भव इति भावः । ननु शक्त्यभावे ऽपि वाक्यस्येवापभ्रंशस्यापि लाक्षणिकत्वमिष्यतएवेति यदि ब्रूयात्तदा ऽप्याह वस्तुत इति ॥ लक्षणानुपपत्तिः, तीरत्वावच्छिन्ने शक्यसम्बन्धग्रहे शुद्धतीरत्वावच्छिन्नविषयकशाब्दबोधोत्पत्त्या प्रवाहस्य शाब्दबोधाऽविषयत्वादिति भावः । स्वजन्यज्ञानेति ॥ स्वजन्यस्मरणेत्यर्थः ॥ यद्यपि शक्तीत्यनुपपादनेनैव वाक्यलक्षणानिरासः सम्भवति पदस्यैवार्थस्मारकत्वेन वाक्यस्य स्मारकत्वाभावात् तथापि वाक्यार्थयोर्बोधत्वाभावसम्बन्धज्ञाने वाक्यस्यापि वाक्यार्थस्मारकत्वसम्भवात्तज्जन्यस्मृति-

नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नतयाधेयतसम्बन्धेनापि तीरस्य घोषादावन्वयासम्भवात् गभीरायां नदीति सप्तमीशून्यस्य तीरे लक्षकत्वे सप्तम्यर्थाधेयत्वादौ तादृशतीरादेरनन्वयापत्तिः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः गभीरायां नदीति भागस्य सप्तमीप्रकृतित्वाभावात्। न च गभीरायां नद्यामिति सप्तम्यन्तस्य गभीरनदीतीरवृत्तित्वे लक्षणास्त्विति शङ्क्यम्। तादृशतीरवृत्तित्वस्य घोषादावन्वयानुपपत्तेः नामार्थयोर्भेदसम्बन्धेनान्वयस्याव्युत्पन्नत्वात् सप्तम्यन्तभागस्य तादृशतीरवृत्तौ लक्ष-

---

विषयसम्बन्धस्यैव लक्षणात्वोपगमे लक्षणायाः शक्तिघटकतया लक्षणायाः शक्यसम्बन्धरूपत्वेन लाघवावकाशः, अतः शक्तीत्युपात्तम् । ननु यत्किञ्चित्पदस्य तात्पर्यापत्त्यैव गौरवमप्यस्तीति ब्रूयात्तदा ऽप्याह किञ्चेति ॥ नामार्थयोरिति ॥ ननु नामार्थत्वं प्रत्ययजन्यस्मृतिविषयत्वं वाक्यञ्च न नामेति कथं गभीरनदीतीरस्य बोधः। यदि च वाक्यस्य पदसमूहरूपतया समूहस्य प्रत्येकानतिरिक्ततया वाक्यजन्यस्मरणस्यापि नामजन्यत्वमक्षतमेवेति उच्यते तदा तत्र प्रत्ययजन्यत्वस्य तथा गभीरनदीतीरस्य प्रत्ययार्थत्वसम्भवेन प्रत्ययार्थस्य नामार्थे भेदेनान्वयोपगमात्। सप्तमीप्रकृतित्वाभावादिति॥प्रातिपदिकस्यात एव सुधीभिर्विधानात्। प्रत्यये ऽप्युद्देश्यस्यैव प्रकृतित्वादर्थवदधातुरित्यनेन प्रत्ययाद्भिन्नशक्तस्यैव प्रातिपदिकसंज्ञाविधानेन गभीराया नदीत्यस्य किञ्चिदर्थाशक्तत्वेन सप्तमीप्रकृतित्वाभावादिति भावः । न चैवं नीलोत्पलं वाच्यवाचकमित्यादौ वाचकनीलोत्पलसमुदायबोधादर्वाक् शक्यतायाः किञ्चिदर्थाशक्तत्वे ऽपि तेषां विभक्तिप्रकृतित्वं न स्यादिति वाच्यम् । कृत्तद्धितसमासाश्चेति सूत्रान्तरेण तेषामपि प्रातिपदिकत्वविधानेन कृत्तद्धितान्तसमासानां विभक्तिप्रकृतित्वसम्भवात् । वस्तुतः प्रकृत्यर्थत्वं प्रकृतिजन्यबोधविषयत्वमेव तच्च प्रकृतिप्रत्ययसमुदायजन्यबोधविषये गभीरनदीतीरे ऽप्यक्षतम् । समुदायस्य प्रत्येकानातिरिक्ततया प्रकृतिघटितसमुदायजन्यस्य प्रकृतिजन्यताऽनपायात्। प्रकृतिमात्रजन्यत्वनिवेशे प्रयोजनविरहात् चैत्रस्य गामानयेत्यादौ चैत्रसम्बन्धिगोः प्रत्ययार्थकर्मत्वे ऽन्वयदर्शनेन तन्निवेशासम्भवाच्च वृत्तौ प्रकृतिनिरूपितत्वमपि न श-

र्य्यग्राहकम् । बहुव्रीहावप्येवम् । तत्र हि चित्रगुपदादौ यदैकदेशान्वयः स्वीक्रियते तदा गोपदस्य गोस्वामिनि लक्षणा गवि चित्राभेदान्वयः । यदि त्वेकदेशान्वयो न स्वीक्रियते तदा गोपदस्य चित्रगोस्वामिनि लक्षणा चित्रपदं तात्पर्य्यग्राहकम् । एवमारूढवानरो वृक्ष इत्यत्र वानरपदे वानरारोहकर्म्मणि लक्षणा, आरूढपदं च तात्पर्य्यग्राहकम् । एवमन्यत्रापि । तत्पुरुषे तु पूर्व्वपदे लक्षणा । तथाहि । राजपुरुषादिपदे राजपदार्थेन पुरुषादिपदार्थस्य साक्षान्ना-

---

णामुपगम्य तस्याभेदेन घोषादावन्वय इत्यपि न, अभेदेनान्वयबोधे समानविभक्तिकत्वस्य तन्त्रत्वादित्यास्तां विस्तरः । एवं अवयवलक्षणैव न तु वाक्ये लक्षणेत्यर्थः । गोपदस्येति । प्रत्ययार्थान्वयानुरोधेनोत्तरपदलक्षणाया युक्तत्वादिति भावः । गोमति, गास्वामिनि । न स्वी।क्रियतइति । गोधर्मिकान्वयबोधे गोधर्मिकवृत्तिज्ञानस्य हेतुताया आवश्यकत्वात् अन्यथा चित्रव्रजोस्तीत्यादावपि व्रजपदार्थस्य गोस्थानरूपस्यैकदेशे गवि चित्रान्वयप्रसङ्गात्। यद्यपि घटशून्यमित्यादावेकदेशान्वयो दृश्यते तथापि तादात्म्ये-

---

क्यते विवक्षितुम् । वाक्यलक्षणाङ्गी।कर्तुर्मते नीलोत्पलादिप्रकृतिनिरूपितप्रत्ययसिद्धेरित्यापाततो रमणीयमेतल्लक्षणति प्रतिभाति । समानविभक्तिकेति ॥ गभीरायां नद्यामिति समुदायस्य किञ्चिद्विभक्तेरसत्त्वादिति भावः । अथ राजपुरुष इत्यादौ राजपदस्याविभक्तिकत्वे ऽपि पुरुषाव्यवहितपूर्वराजपदार्थस्य राजसम्बन्धिनि पुरुषे भेदेनान्वयदर्शनात् प्रकृते ऽपि सप्तम्यन्तवाक्यस्य घोषपदाव्यवहितपूर्वतया तदर्थस्य गभीरनदीतीरवृत्तेर्घोषे भेदान्वये बाधकाभावादिदमसङ्गतम् । न चाव्यवहितपूर्ववृत्तिनः शक्यत्वरूपपदत्वमपि तादृशान्वयबोधे प्रयोजकम् । नीलघटमि-

न्वयो निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याऽव्युत्पन्नत्वात्, अन्यथा राजा पुरुष इत्यत्रापि तथान्वयबोधः

---

न तथान्वयो न स्वीक्रियते इति हृदयम् । निपातातिरिक्तेति । निपातपदमव्ययस्याप्युपलक्षणम् । तेन चन्द्र इवेत्यादाविवार्थसादृश्ये चन्द्रस्य प्रतियोगितयाऽन्वयोपपत्तिः । अन्यथा, अव्ययनिपातातिरिक्तनामार्थयोरपि भेदेनान्वयबोधस्वीकारे । तथान्वयबोध इति । भेदेनान्वयबोधः स्यादित्य-

---

त्यादौ नीलघटेत्यस्य वाक्यत्वेन पदत्वाभावे ऽपि तदर्थस्य नीलघटसम्बन्धिनोरिवाऽभेदेनान्वयाऽदर्शनादिति चेन्न । घोषो गभीरायां नद्यामिति वाक्यादपि तादृशशाब्दबोधस्यानुभवसिद्धत्वेन तत्राप्यव्यवहितपूर्वत्वसमानविभक्तिकत्वयोरभावादभेदान्वयबोधानुपपत्तेर्वज्रलेपत्वात् इति विभावनीयम् । घटशून्येति ॥ शून्यपदस्याऽभावपदार्थकतया तदेकदेशे ऽभावे एव घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटपदार्थस्यान्वयस्वीकारादिति भावः । तथान्वयइति ॥ तादृशान्वय इत्यर्थः । पदार्थैकदेशे पदार्थान्तरस्य तादात्म्येनैवान्वयो न स्वीक्रियते भेदसम्बन्धेन तु स्वीक्रियते एवेति भावः । वृजपदार्थैकदेशे गवि चित्रपदार्थस्याभेदेनान्वयाभावेन बहुव्रीहौ गोपदार्थैकदेशगव्यपि चित्रपदार्थस्य भेदान्वयसम्भवात् चित्रपदस्य तात्पर्यग्राहकत्वमेवाङ्गीकरणीयमिति भावः ॥ मूले आरूढवानर इति ॥ तत्कर्मकारोहणकर्त्ता वानर इति बहुव्रीहिसमासे विग्रहवाक्याद् यादृशविशेषणविशेष्यभावापन्नः शाब्दबोधो भवति समासवाक्यात्तद्विपरीतविशेषणविशेष्यभावापन्नार्थबोध इति नियमेन वानरकर्तृकारोहणकर्म वृक्ष इति बोधस्योपगन्तव्यतया वानरपदस्य वानरकर्तृके लक्षणां स्वीकृत्य आरूढपदस्य वानरारोहकर्मणि लक्षणास्वीकारे पदद्वये च लक्षणापत्तिः । बहुव्रीहौ उत्तरपदसमासप्रयुक्तलक्षणेति नियमस्य उत्तरपदार्थप्राधान्यनियमस्य भङ्गापत्तिः स्यादिति वानरपदस्यैव वानरारोहकर्मणि लक्षणा आरूढपदं तात्पर्यग्राहक-

स्यात् । पटो न घट इत्यादौ घटपटाभ्यां नञः साक्षादेवा न्वयान्निपातातिरिक्तेति । नीलो घट इत्यादौ नामार्थयोर-भेदसम्बन्धेनान्वयाद्भेदेनेति । न च राजपुरुष इत्यादौ लु-प्तविभक्तेः स्मरणं कल्प्यमिति वाच्यम् । अस्मृतविभक्तेर-

---

र्थः । साक्षादेव, प्रत्ययार्थमद्वारीकृत्यैव । भूतले घट इत्यादावाधेयतासंसर्गे-णापि घटभूतलयोरन्वयात् साक्षादित्यस्यापि व्युत्पत्तौ निवेशादिति भावः । नञः, नञर्थान्योन्याभावस्य । स्मरणं कल्प्यमिति । तथा चात्रापि प्रत्य-

---

मेवेति भावः । ननु निपातमात्रार्थस्य च नामार्थान्तरेण भेदान्वयस्वीकारे चन्द्र इव मुखमित्यादौ इवार्थे सादृश्ये चन्द्रस्य निरूपितत्वसम्बन्धेनान्वयो न स्यात् । चादयो ऽद्रव्ये निपाता इत्यनुशासने द्रव्यभिन्नार्थकानां चादीनामेव निपातसंज्ञा-विधानात् इवशब्दस्य चादिगणमध्ये पाठाभावादित्याशङ्कां निराकुर्ते निपातपदमि-ति ॥ तथा चात्र निपातपदमव्ययार्थकमेवेति निपातानामव्ययत्वादेव लाभसम्भ-वादिति भावः । प्रत्ययार्थमद्वारीकृत्यैवेति ॥ विभक्त्यर्थभिन्नसम्बन्धेनैवेत्यर्थः । ननु मूले निपातातिरिक्तेत्यस्य प्रयोजनमुक्तम् न तु साक्षादित्यस्यैवेति नियमे साक्षात्पदमनर्थकमित्याशङ्कां निराकुरुते भूतलइत्यादि ॥ आधेयतासंसर्गेणापीति ॥ अपिना स्वरूपसम्बन्धेन घटे भूतलवृत्तित्वान्वयस्य समुच्चयः । अन्वयादिति ॥ यद्यत्र घटभूतलवृत्तित्वप्रकारकबोधस्वीकारेणैवोपपत्तौ आधेयतान्तरस्यापि घटे प्रका-रत्वोपगमो ऽनुचितः पदार्थस्य संसर्गविधया भानाङ्गीकारात्, तथापि भूतले घट इति वाक्यजन्यज्ञानानन्तरं घटो भूतलवृत्तिर्वा न वेति संशयानुत्पादस्यानुभवसिद्धतया आधेयतया भूतलाभाववान् घटः प्रमेय इति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनाप्रयुक्तलाघवेन विभक्त्यर्थस्य संसर्गवि-धयापि भानमादृतं तादृशवाक्यजन्यबोधस्य घटो भूतलीय इत्याकारकत्वे घटे आ-धेयतया भूतलाभावज्ञानमविहाय ज्ञानमेवेति तदभावावगाहिघटितशाब्दबोधसाम-

यार्थद्वारैव राजपुरुषयोरन्वयान्नोक्तव्युत्पत्तिविरोध इति भावः । परे तु राजपुरुष इत्यादितत्पुरुषे न लक्षणा व्युत्पत्तिवैचित्र्येण स्वत्वादिसंसर्गेणैव राज्ञः पुरुषादावन्वयबोधस्वीकारात् अन्यथा दर्शिते राजमातङ्गास्तस्यैवामी तुरङ्गमा इत्यादौ तच्छब्देन राज्ञः परामर्शो न स्यात् तस्यैकदेशत्वा-

---

र्थ्यासत्त्वे विशेष्यतावच्छेदकप्रकारकनिर्णयघटितोक्तप्रत्ययसामग्र्येव तिष्ठतीत्येतादृशप्रत्यक्षे तादृशसामग्र्याः प्रतिबन्धकत्वं न कल्पनीयमिति लाघवमिति भावः । घटः पटो नेत्यत्रात्यन्ताभाव एव वक्तुं शक्यते नञोऽत्यन्ताभावबोधे ऽनुयोगिवाचकपदोत्तरं सप्तम्यपेक्षणादतो नञो ऽन्योन्याभाव एवेत्याह नञर्थेति।। षष्ठीस्मारितस्वत्वसम्बन्धेनैवेत्यर्थः। अथ वा स्वत्वे राजपदान्वयः स्वत्वे एव पुरुषान्वयः न तु राजपुरुषे इत्यर्थः । उभयथापि षष्ठीविषयकस्मरणकल्पनमावश्यकमिति भावः । मूले ऽस्मृतविभक्तेरपीति ॥ यद्यपि तत्पुरुषे पूर्वपदस्य स्वार्थविशेषितविग्रहवाक्यार्थविभक्त्यर्थविशिष्टे निरूढलक्षणोपगमेन तत्तद्विभक्तिकरणे पूर्वपदस्य तत्तदर्थे निरूढलक्षणानिर्णय एव न सम्भवति लक्षणारूपवृत्तिज्ञानाभावेन शाब्दबोधो न सम्भवत्येवेति अस्मृतविभक्तेः शाब्दबोधोपपादनं दुर्वचं तथापि विभक्तिस्मरणं विना निरूढलक्षणातस्य निर्णये ऽपि सामान्यलक्षणाज्ञानं तदधीनपदार्थस्मरणं न सम्भवत्येव निरूढलक्षणाज्ञानादेव पदार्थस्मरणमिति न नियमः । तथा सति गङ्गायां घोष इत्यादौ गङ्गापदात्तीरस्मरणानुपपत्तिः । एवञ्च तत्तत्स्थलेषु नानाविभक्तिकस्मरणकल्पनामपेक्ष्य लक्षणया राजपदाद्राजसम्बन्ध्युपस्थितिं कल्पयित्वा भेदशाब्दबोधोपगम एवोचितो लाघवात् । राजपुरुष इति कर्मधारये कर्मधारयानुपपत्त्यापि लक्षणाबीजाभावेन राजाभिन्नः पुरुष इति वाक्यार्थबोध एव स्वीक्रियतइति भावः । मतान्तरमाह परे त्विति ॥ व्युत्पत्तिवैचित्र्येणेति ॥ पुरुषविशेष्यकस्वत्वसंसर्गकराजप्रकारकशाब्दबोधम्प्रति राजपदाव्यवहितोत्तरपुरुषपदत्वानुपूर्वीज्ञानस्य कारणत्वादित्यर्थः । अत एव राजपुरुष इत्यादौ तादृशशाब्दबोधकारणसम्भवेन नोक्तापत्तेरवकाश इति भावः । परामर्शो न स्यादिति ॥ तत्पदे पूर्ववाक्यस्थपदार्थस्यैव परामर्शः न तु तादृशार्थतावच्छेदकस्यापीति नियमः । अन्यथा ऽत्र घटो ऽस्ति न

पि ततो बोधोदयात् । तस्माद् राजपदादौ राजसम्बन्धिनि लक्षणा तस्य च पुरुषेण सहाभेदान्वयः । द्वन्द्वे तु धवखदिरौ छिन्धीत्यदौ धवः खदिरश्च विभक्त्यर्थद्वित्वप्रका-

---

दित्याहुः । द्वन्द्वे तु इतरेतरद्वन्द्वे तु धवखादिरावित्यत्र धवत्वं खदिरत्वं च प्रत्येकं

---

द्रव्यमिति स्वारसिकप्रयोगापत्तेः । तथा च राजपदस्य राजसम्बन्ध्यर्थकत्वे तत्पदेन राज्ञः परामर्शो न स्यादिति भावः । आहुरित्यस्वरसोद्भावनं तद्बीजं तु एवं सति राजपुरुष इत्यादावपि स्वत्वसंसर्गकबोध एवोचितः अतिप्रसङ्गस्य षष्ठ्यन्तराजपदसमभिव्याहारज्ञानस्य तादृशशाब्दबोधनियमत्वोपगमेनैव वारणसम्भवात् । न चैवं व्याससमासवाक्ययोः परस्परजन्यत्वे व्यभिचारेण कारणतैवानुपपन्नेति वाच्यम् । तत्तदानुपूर्वीज्ञानाव्यवहितोत्तरत्वस्यापि कार्यतावच्छेदककोटौ निवेशनीयतया व्यभिचाराऽप्रसक्तेः । अन्यथा त्वन्मते ऽपि राजा स्वत्वं पुरुष इत्यतः शाब्दबोधवारणाय षष्ठ्यन्तराजपदसमभिव्याहारज्ञानस्य राजस्वत्वप्रकारकशाब्दबोधहेतुतायाः कल्पनीयतया पर्यायपदान्तरघटितवाक्यादपि तादृशशाब्दबोधोपन्यासे व्यभिचारस्य दुर्वारत्वात् । यदि च पुरुषराज इत्यादौ आश्रयतया स्वत्वाद्यभाव एव नञा बोधनीयः वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वे दोष इति वक्तव्ये ऽभावान्तरकल्पने गौरवमिति चेत्समनियताभावानामैक्येन तादृशाभावस्य राजस्वत्वाभावरूपत्वाभ्युपगमेनाभावान्तरकल्पनात् । न च स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकल्पने गौरवमिति वाच्यम् । स्वत्वादिषु विभक्तीनां शक्तिकल्पनं विभक्तिजन्यस्वत्वाद्युपस्थितीनां शाब्दबोधहेतुताकल्पनं तादृशोपस्थितीनां भिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतावच्छेदककोटौ प्रवेशापेक्षया तादृशप्रतियोगिताव्यक्तिकल्पनस्यैव लघुत्वादिति विभक्तेः सङ्ख्याभिन्नार्थकतैव न स्यादिति । किञ्च राजसम्बन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहदशायां तादृशलाक्षणिकराजपदघटितराजपुरुष इति कर्मधारयाद्राजस-

नोद्देश्यतावच्छेदकम् सुपामुद्देश्यतावच्छेदकव्याप्यसङ्ख्याबोधकत्वस्या- काशावित्यादिवाक्ये प्रामाण्यापत्तिभिया क्लृप्तत्वेन धवद्वयस्य खदिरद्वयस्य वा बाधापत्तेः। परन्तु खदिरपदस्य धवखदिरसाहित्याश्रये लक्षणोपगम्येते एवं चोद्देश्यतावच्छेदकीभूततादृशसाहित्यव्याप्यत्वं न धवद्वयवृत्तिद्वित्वस्य न वा खदिरद्वयवृत्तिद्वित्वस्याऽपि तु धवखदिरोभयवृत्तिद्वित्वस्येति धवद्वयादेर्बो-

---

म्बन्ध्यभिन्नः पुरुषः इत्यादिबोधस्य सर्वानुमततया तादृशानुपूर्वीज्ञानस्य द्विविध- शाब्दबोधहेतुताकल्पने गौरवम् । अपि च राजसम्बन्ध्यभिन्नः पुरुषः इत्या- दिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षं प्रति तादृशानुपूर्वीज्ञानघटितशाब्दसामग्र्याः प्र- तिबन्धकत्वकल्पने गौरवं मन्मते तदभावादिघटितशाब्दसामग्र्याः विशे- ष्यतावच्छेदकप्रकारकनिर्णयघटितप्रत्यक्षसामग्र्या एवासत्त्वेन प्रत्यक्षापत्त्ययोगकल्प- नात् । न च त्वया ऽपि स्वत्वसम्बन्धेन राजाभाववान् पुरुषः प्रमेय इति तादृ- शप्रत्यक्षं प्रति पृथक् शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति वाच्यम् । राजकीयाभिन्नसम्बन्धं प्रमेयमिति प्रत्यक्षं प्रत्यपि स्वत्वस्यासंसर्ग इत्यादिना ता- दृशशाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनस्य तन्मते ऽधिकत्वादित्यलं विस्तरेण । मूले द्वन्द्वे न लक्षणेत्युक्तं तन्न सङ्गच्छते । अहिनकुलमित्यादौ द्वन्द्वे उत्तरपद- स्य अहिनकुलसमुदायलक्षणयाः स्वतःसिद्धत्वादतो द्वन्द्वपदमितरेतरद्वन्द्वपरमि- त्याह इतरेतरेति ॥ मूले विभक्त्यर्थद्वित्वप्रकारेणेत्यत्र विभक्त्यर्थः कर्मत्वं तस्मि- न् प्रकारतया धवखदिरौ बुध्येते इत्यर्थो बोध्यः। सुपामिति ॥ आकाशाविति वाक्यस्य प्रामाण्याभ्युपगमेनैतन्निर्वाहः । विभक्त्यर्थद्वित्वादेरुद्देश्यतावच्छेद- कव्याप्तिविशिष्टसङ्ख्यायाः पर्याप्त्याख्यस्वरूपसम्बन्धेनैव स्वप्रकृत्यर्थे अन्वयो नेत्यु- पेयम् । अन्यथा घटाकाशगतद्वित्वस्य केवलपर्याप्त्याख्यसम्बन्धेन समवायेना- काशे सत्त्वे ऽपि तादृशप्रयोगस्य प्रामाण्यापत्तेः । तथा ऽऽकाशद्वित्वाप्रसिध्या ऽऽकाशस्य तादृशपर्याप्तिसम्बन्धेन न तद्वत्त्वमिति नोक्तवाक्यस्य प्रामाण्या- पत्तिः । एवञ्च तादृशपर्याप्तिसम्बन्धेन तद्वत्त्वं द्वित्वस्योद्देश्यतावच्छेद- कव्याप्यत्वएवोपपादितं भवतीत्युद्देश्यतावच्छेदकव्याप्यद्वित्वादिसङ्ख्याप्रमा-

रेण बुध्यते तत्र न लक्षणा । न च साहित्ये लक्षणेति वाच्यम् । साहित्यशून्ययोरपि द्वन्द्वदर्शनात् । न चैकक्रियान्व-

---

ध इति मीमांसकमतं शङ्कते । न च साहित्ये इति । साहित्याश्रये इत्यर्थः । सहवृत्तित्वं साहित्यं लक्ष्यमुतैकक्रियान्वयित्वमिति विकल्प्याद्यं दूषयति । साहित्यशून्ययोरपीति । द्वितीयं शङ्कते । न चैकेति । अननुभवाचेति । वस्तुगत्यैकक्रियान्वयित्वस्य धवखदिरयोः सत्वेप्येकक्रियान्वयित्वस्य

---

जनकत्वं विभक्तीनामित्यर्थः । प्रमोपादानादाकाशावित्यादिवाक्याद्योग्यताभ्रमे घटाकाशगतद्वित्वस्य आकाशे प्रकारतावगाहिशाब्दबोधोत्पत्तावपि न क्षतिः । न चोक्तस्थले तादृशपर्याप्तेरप्रसिद्धतया कथं तदवगाहिभ्रमः सम्भवतीति वाच्यम् । एकत्वादिपर्याप्तेराकाशत्वव्याप्यतया तेन व्यधिकरणसम्बन्धेन घटाकाशगतद्वित्वस्य भ्रमे प्रकारत्वोपगमात् । एतेनोद्देश्यतावच्छेदकव्याप्यद्वित्वस्यैव द्विवचनशक्यत्वे आकाशावित्यादिवाक्यात् प्रमात्मको ऽपि शाब्दबोधो न स्यादाकाशत्वव्याप्यद्वित्वाप्रसिद्ध्या विभक्तेस्तद्बोधकत्वासम्भवादिति प्रत्युक्तम् । उक्तरीत्या भ्रमस्योपपादितत्वात् द्वित्वमात्रे विभक्तिशक्तिभ्रमेण तादृशशाब्दबोधोपपादनमसत् । तथा सति तादृशवाक्यजन्यशाब्दबोधस्य भ्रमत्वानुपपत्तेः घटाकाशगतद्वित्वस्य आकाशे पर्याप्त्यादिसम्बन्धेन बाधकत्वादिति बोध्यम् ॥ अत्र चैत्रो मैत्रश्च गच्छत इत्यादिवाक्यात्तेनोद्देश्यतावच्छेदकचैत्रत्वाद्यव्यवहितद्वित्वादिबोधात् विभक्तीनामित्युपेक्ष्य सुपामित्युक्तमित्यवधेयम् । न च सिद्धान्ते घटपटावित्यादौ केवलपर्याप्तिसम्बन्धेनैव द्वित्वान्वयात्सुपामित्यत्रैकधर्मोद्देश्यतावच्छेदकत्वमित्यस्य पूरणीयतयोक्तस्थले धर्मद्वयस्योद्देश्यतावच्छेदकतया इदमसङ्गतमिति वाच्यम् । सिद्धान्ते तथात्वेपि मीमांसकमते साहित्यस्यैवोद्देश्यतावच्छेदकतया पूरणस्यानावश्यकत्वात् । घटपटौ तिष्ठत इत्यादौ तद्धानस्य बोधकता सङ्ख्याबोधनादिति मन्तव्यम् । सहवृत्तित्वमिति ॥ एकदेशवृत्तित्वमित्यर्थः । लक्ष्यं लक्ष्यतावच्छेदकमेकक्रियान्वयित्वम् ऐक्योक्त्युपस्थाप्यार्थान्वयित्वम् । मूले सा-

यित्वरूपं साहित्यमस्तीति वाच्यम् । क्रियाभेदेऽपि धवखदिरौ पश्य छिन्धीत्यादिदर्शनात् साहित्यस्याननुभवाच्च । अत एव राजपुरोहितौ सायुज्यकामौ यजेतामित्यत्र लक्षणाभावाद् द्वन्द्व आश्रीयते । तस्मात् साहित्यादिकं नार्थः किं तु वास्तवो भेदो यत्र तत्र द्वन्द्वः । न च नीलघटयो-

---

शाब्दबोधाभावादित्यर्थः । इदमुपलक्षणम्, चैत्रमैत्रौ गच्छत इत्यादौ चैत्रादिपदस्य यदि साहित्यविशिष्टे लक्षणा तदा साहित्यस्य व्यासज्ज्यवृत्तितया तदवच्छेदेनाव्यासज्ज्यवृत्तेर्गमनकर्तृत्वस्यान्वयासम्भव इत्यपि बोध्यम् । ननु यदि द्वन्द्वे न लक्षणा तदा कर्मधारयाद् द्वन्द्वस्य को विशेष इत्यत आह । किं त्विति । चार्थे द्वन्द्व इत्यनुशासनं तत्र चार्थाश्चत्वारः स-

---

हित्यशून्ययोरिति ॥ गोत्वाश्वत्वे पश्येत्यादौ दर्शनरूपक्रियान्वयित्वस्य सत्त्वान्न द्वन्द्वानुपपत्तिः । अतो द्वितीयदूषणान्तरमाह पश्य छिन्धीति ॥ यथाक्रमं दर्शनच्छेदनस्य तात्पर्येणापि दर्शनात् द्वन्द्वदर्शनादित्यर्थः । साहित्यस्याननुभवादिति दूषणमपि द्वितीयकल्पाऽभिप्रायेणैवेत्याशयादिति व्याचष्टे वस्तुगत्येति ॥ शाब्दबोधाभावादिति ॥ एकक्रियान्वयित्वम् एकविषयनिरूपितससंर्गतानिरूपितशाब्दबोधविषयत्वमेव तच्च न शाब्दबोधविषयः । स्वस्मिन् स्वविषयकत्वस्यानुभवात् सिद्धिः । वस्तुतः स्ववृत्तीनामपि कालिकसम्बन्धेन वृत्तित्वमक्षतमेवेति न क्वापि द्वन्द्वानुपपत्तिरित्याशङ्कायामेव साहित्यस्येत्यादि दूषणमभिहितम् । एककालवृत्तित्ववदेः शाब्दबोधविषयत्वाननुभवाच्चेति तदर्थ इति युक्तमुत्पश्यामः । व्यासज्ज्यवृत्तीति ॥ यद्यप्येकदेशवृत्तित्वम् एकक्रियान्वयित्वं च न व्यासज्ज्यवृत्ति तथापि पक्षद्वये दूषणाभिधानात् अपेक्षाबुद्धिविषयत्वमेव साहित्यं वाच्यम् तच्च व्यासज्ज्यवृत्त्येवेति भावः । एतच्चापाततः । द्वौ गच्छत इत्यादौ व्यासज्ज्यवृत्तिद्वित्वाद्यवच्छेदेनापि गमनकर्तृत्वान्वयस्य सर्वसम्मतत्वादिति विभा-

रभेद इत्यादौ कथमिति वाच्यम् । तत्र नीलपदस्य नीलत्वं घटपदस्य घटत्वम्, अभेद इत्यस्य चाश्रयाभेद इत्यर्थात् ।

---

मुच्चयान्वाचयेतरेतरयोगसमाहारभेदात् तत्र समुच्चयान्वाचययोः सामर्थ्याभावान्न समासः इतरेतरसमाहारयोः सामर्थ्यसत्त्वात्तत्र समासः तत्र चार्थस्य भेदव्याप्यत्वाद् भेदे द्वन्द्व इत्याशयः । इत्यादावित्यादिपदेन प्रमाणप्रमेयेत्यादिसूत्रपरिग्रहः । कथमिति । यदि समासघटकपदार्थयोर्यत्र भेदस्तत्रैव द्वन्द्वस्तदा नीलघटयोर्भेदाभावात्कथं द्वन्द्वः एवं प्रमाणप्रमेयेत्यादिसूत्रे आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति सूत्रोपात्तद्वादशविधप्रमेयान्तर्गतमनोबुद्धीन्द्रियाणां प्रमाणत्वेन प्रमाणप्रमेययोर्भेदाभावात् कथं द्वन्द्व इत्यर्थः । लक्षणेति । तथा च तयोर्भेदसत्त्वाद् द्वन्द्व इति भावः । नन्वभेद इत्यसङ्गतं नीलत्वघटत्वयोर्भेदाभावादत आह । अभेद इत्यस्येति । केचित्तु पदार्थत्वं पदजन्यप्र-

---

वनीयम् । कर्मधारयादिति ॥ कर्मधारये पदद्वये लक्षणाविरहेण लक्षणाविरहितसमासत्वस्य द्वन्द्वकर्मधारयोभयसाधारणत्वादिति भावः । समुच्चयेति ॥ घटं पटं चानयेत्यत्र चार्थः समुच्चयः । अत्र च घटपटयोः समाननिष्ठानयनक्रियान्वयित्वेन सापेक्षत्वान्न समासः एवं भिक्षामट गां चानयेत्यत्र चार्थोऽन्वाचयः । अत्रापि भिक्षागवोः समासनिष्ठतया सापेक्षत्वादेवासामर्थ्यादेव न समासः । रामश्च लक्ष्मणश्च रामलक्ष्मणौ, अहिश्च नकुलश्च अहिनकुलमिति इतरेतरसमाहारयोरेव यत्र चार्थत्वं तत्रैव समास इति भावः । परन्तु यत्र पदार्थयोर्भेदस्तत्रैव चकारः प्रयुज्यतइति समुच्चयान्वाचयेतरेतरेषु चार्थो भेद एव एतस्मित् भेदे समस्यमानपदार्थयोर्वस्तुतो वर्तमानत्वे सति द्वन्द्वसमासो भवतीति । चार्थे द्वन्द्व इति सूत्रार्थः । प्रमाणप्रमेयत्यादीत ॥ प्रमाणस्य प्रमणाभिन्नत्वेन तत्र द्वन्द्वो न स्यादिति भावः । तथा च नीलघटयोरित्यत्र नलिघटत्वयोर्लक्षणा । तथा प्रमाणप्रमेत्येत्यादिसूत्रेपि प्रमाणत्वे प्रमाणपदस्य लक्षणा । अभे-

तीतिविषयत्वम्, तथा च क्वचित्पदार्थभेदात्क्वचित्पदार्थतावच्छेदकभेदाद्द्वन्द्वः प्रकृते च नीलत्वघटत्वयोः पदार्थतावच्छेदकयोर्भेदाद् द्वन्द्वः। अस्तु वा पदार्थतावच्छेदकभेदएव द्वन्द्वः, न चैवं घटा इत्यादौ द्वन्द्वस्याप्रसक्तत्वेन तदपवादकः सरूपैकशेषो न स्यादिति वाच्यम्। इष्टापत्तेः। तत्र घटपदोपस्थापितेषु बहुत्वान्वयादेव बहुघटबोधसम्भवात्, सकृदुच्चरित इत्यादिव्युत्पत्तौ मानाभावात्, सरूपैकशेषविधेर्हरी इत्यादौ सार्थकत्वात्। अस्तु वा सकृदि-

---

दपदस्याश्रयाभेदइव पदार्थतावच्छेदकभेदादेव द्वन्द्वस्य साधुता । न चैवं पदार्थयोर्भेदः घटद्वन्द्वस्य साधुतानियामक इति वाच्यम् । घटश्च पटश्च घटपटावित्यत्र द्वन्द्वोपपत्तये पदार्थभेदस्य द्वन्द्वसाधुतानियामकत्वोपगमात् । न च यत्र सरूपाणामेकशेष इति सूत्रेण पदान्तरस्य लोपविधानाद् द्वन्द्व एव नास्ति पदार्थभेदस्य द्वन्द्वसाधुतानियामकत्वोपगमेनेति वाच्यम् । सरूपैकशेषस्य द्वन्द्वसमासापवादकत्वेन द्वन्द्वस्य साधुतास्थलएव सरूपैकशेषविधेः प्रवर्त्तनीयतया तत्र च पदार्थतावच्छेदकघटत्वस्य भेदाभावेन पदार्थयोर्घटव्यक्त्योर्भेदादेव द्वन्द्वस्य साधुतामुपपाद्य तदपवादकसरूपैकशेषविधेः प्रवर्त्तनीयत्वादिति भावः । न चैवं नीलघट इति कर्मधारयस्थले ऽपि पदार्थतावच्छेदकभेदसत्त्वेन द्वन्द्वप्रवृत्त्या कर्मधारयोच्छेदापत्तिरिति वाच्यम् । समस्यमानपदार्थयोरभेदविवक्षायामेव कर्मधारयविधानाद्विशेषणसामान्याभावादभेदविवक्षायाम् एव द्वन्द्वसमासविधेरभ्युपगमादिति ध्येयम् । सकृदुच्चरित इति ॥ एकवारोच्चरितपदादेकस्यैवार्थस्य बोधेन घटपदादेकदा नानाघटबोधासम्भवादित्याशङ्कायामिदमुक्तम् । न चैवं सरूपाणामिति सूत्रवैयर्थ्यम् । एवं घटपदेनैव नानाघटोपस्थितिसम्भवेन पदान्तरं कल्पयित्वा तल्लोपविधानस्यानुचितत्वादिति । एकशेषविधेरिति ॥ हरिपदे सूर्यत्वसिंहत्वादिपदार्थतावच्छेदकानां भेदेन द्वन्द्वप्रसक्त्या तत्रैव तदपवादकसरूपैकशेषविधेः सार्थकत्वादिति भावः । ननु सकृदुच्चरित इति व्युत्पत्त्यनभ्युपगमे सैन्धवादिपदादेकदैव लवणाऽश्वयोर्बोधापत्तिः । न च तात्पर्यज्ञानस्य नियामकत्वात् नानुपपत्तिरिति वाच्यम् । तात्पर्यसत्त्वे ऽप्येकदा लवणाऽश्वयोर्बोधाऽननुभवादित्यत आह

समाहारद्वन्द्वे तु यदि समाहारो ऽप्यनुभूयतइत्युच्यते तदा-ऽहिनकुलमित्यादौ परपदे ऽहिनकुलसमाहारे लक्षणा पूर्व्व-पदं तात्पर्य्यग्राहकम् । न च भेरीमृदङ्गं वादयेत्यत्र कथं स-माहारस्यान्वयः, अपेक्षाबुद्धिविशेषरूपस्य तस्य वादना-सम्भवादिति वाच्यम् । परम्परासम्बन्धेन तदन्वयात् । ए-

---

त्यादिव्युत्पत्तिः परन्तु सकृदित्यर्थपदार्थैकदेशे वृत्तौ विशेषणम् । वस्तुतो बोधविशेषणमेव तदिति न दोष इत्याहुः । समाहार इति । अहिनकुल-मित्यादौ अहिनकुलयोः समाहार इति प्रतीतेरनुभवसिद्धत्वामित्यर्थः । व-स्तुतस्तत्राहिनकुलमात्रप्रतीतेर्नोत्तरपदे समाहारलक्षणा न वा शक्तिरित्यभि-प्रेत्योक्तं यदीति । पूर्वपदमिति । प्रत्ययानामिति । व्युत्पत्तेर्विनिगमक-त्वादिति भावः । कथमिति । कथं समाहारबोध इत्यर्थः । तत्र हेतुमाह । वादनासम्भवादिति । अभिघाताख्यसंयोगावच्छिन्नक्रियाया एव वाद-नपदार्थतया धात्वर्थतावच्छेदकीभूततादृशाभिघाताख्यसंयोगस्य समाहारे ऽसम्भवेन वादनकर्मत्वासम्भवादित्यर्थः । परम्परासम्बन्धेन, स्वाश्रयवृ-त्तित्वरूपेण । तदन्वयात्, वादनकर्मत्वान्वयात् । एवमिति । उत्तरपदे

---

अस्तु वेति ॥ पदार्थैकदेशे इति ॥ सकृदुच्चरित इत्यत्रार्थशब्दावृत्त्या पदबो-ध्यः तदेकदेशवृत्तौ सकृदित्यर्थस्यैकत्वस्यान्वयः । तथा च सकृदुच्चरितशब्द एकया वृत्त्या स्वबोध्यार्थं बोधयतीति व्युत्पत्त्यर्थकतया घटत्वावच्छिन्नैकशक्तेर्ना-नापदबोधानुपपत्तिरिति भावः । ननु हरयस्तिष्ठन्तीत्यादौ तात्पर्यसत्त्वे सिंहसू-र्यादीनामपि बोधो ऽनुभवसिद्ध इति नानावृत्त्यापि नानार्थानामेकदा नानार्थबोधक-त्वमङ्गीकरणीयम् इत्याशयेनाह वस्तुत इति ॥ तथा चैकपदज्ञानादेक एव शा-ब्दबोधः न तु क्रमिकशाब्दबोधद्वयमित्येवोक्तव्युत्पत्तेः पर्यवसितार्थ इति भावः । मूले वादनासम्भवादिति ॥ शब्दजनकसंयोगानुकूलव्यापारो वादनपदार्थः । धात्व-

वं पञ्चपूलीत्यादावपि । परे त्वहिनकुलमित्यादावहिर्नकुलश्च बुध्यते प्रत्येकमेकत्वान्वयः, समाहारसंज्ञा च यत्रैकत्वं नपुंसकत्वं च प्राणितूर्य्येत्यादिसूत्रेणोक्तं तत्रैव, अन्यत्रैववचनमसाध्विति वदन्ति । पितरौ श्वशुरावित्यादौ पितृत-

---

समाहारलक्षणेत्यर्थः । नव्यमतमाह । परे त्विति । बुध्यतइत्यस्य न तु समाहारोपीति शेषः । ननु यदि समाहारो न बुध्यते तदैकत्वस्य कुत्रान्वयः समाह्रियमाणयोरेकत्वाभावादत आह । प्रत्येकमिति । तत्रैकवचनं साधुत्वार्थमित्यपि वदन्ति । ननु पाणिपादमित्यादेः समुदायस्य समाहारबोधकत्वाभावे कथं तस्य समाहारसञ्ज्ञेत्यत आह । समाहारसञ्ज्ञेति । तत्रैवेति । तथा च पारिभाषिक्येव सा ऽन्वर्थत्वे ऽन्यत्रातिप्रसङ्गादिति भावः । ननु तादृशसञ्ज्ञायाः किं प्रयोजनमत आह । अन्यत्रेति । समाहारातिरिक्तद्वन्द्वे इत्यर्थः । तथा च नित्यैकवचनक्लीबलिङ्गत्वादिपदसंस्कारार्थत्वान्न तस्या वैयर्थ्यमिति भावः । पितरौ श्वशुरावित्यादावि-

---

र्थतावदोच्छकसंयोगे द्वितीयार्थाधेयत्वान्वयो वाच्यः । संयोगे बुद्धिवृत्तित्वस्य बाधादिति भावः । अन्वर्थत्वइति ॥ समाहारसंज्ञाया इति ॥ समाहारबोधकत्वप्रयुक्तइत्यर्थः । अन्यत्रेति ॥ असमुदायदेशेष्वपीत्यर्थः । अतिप्रसङ्गात्, समाहारसंज्ञातिप्रसङ्गात् । पदसंस्कारार्थत्वादिति ॥ पदस्पृहानुकूलादिपदस्य संस्कारो विलक्षणधर्मसंज्ञा च नपुंसकत्वमित्येकवचनान्तरूपतदर्थत्वात् । तत्प्रयोजकत्वात् समाहारद्वन्द्वएव तथोपगमादिति भावः । विरूपैकशेष इति ॥ सरूपाणामेणशेष इति सूत्रेण समानानुपूर्वीकपदानाम् एकशेषविधानाद् विभिन्नानुपूर्वीकपदस्थले पिता मात्रा शिष्यते तत्र विशिष्टस्य पितृपदस्यैव जनकपदम्पत्योर्लक्षणा सभिव्याहृतपदसत्त्वे तदर्थनिरूपितजनकत्वमेव प्रतीयते तदभावे तु उच्चारयितुरेवेति मन्तव्यम् । पितृद्व-

दे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा । एवमन्यत्रापि । घटा इत्यादौ तु न लक्षणा घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात् । कर्म्मधारयस्थले तु नीलोत्पलमित्यादावभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारस्तत्र च न लक्षणा. अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषो लक्षणापत्तेः किं तु कर्म्मधारयो लक्षणाभावात् । न च निषादस्य सङ्करजातिविशेषस्य वेदाऽनधिकाराद् याजनाऽसम्भव इति वाच्यम् । निषादस्य विद्याप्रयुक्तेस्तत

---

ति । चैत्रस्य पितरावित्यादौ विरूपैकशेषस्थले इत्यर्थः । लक्षणेति । एकस्य चैत्रादेः पितृद्वयासम्भवेन तत्र विरूपैकशेषं विना गत्यभावादिति भावः । विरूपैकशेषत्वेपि तत्र लुप्तमात्रादिशब्दस्मरणेनैव शाब्दबोधान्न लक्षणेत्यन्ये । एवमन्यत्रापीति । पुमान् स्त्रियेत्यनेन यत्रैकशेषस्तत्र दम्पतीपूजाप्रकरणे ब्राह्मणावानयेत्यादौ शिवौ नमस्कुर्यादित्यादौ भ्रातरौ पुत्रावित्यत्रापि प्रमाणान्तरेण स्त्रीपरत्वज्ञाने भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति विरूपैकशेषाद् भातृपदे भ्रातृस्वस्रोः पुत्रपदे च पुत्रदुहित्रोर्लक्षणेत्यर्थः । न लक्षणेति । बहुत्वान्वययोग्यानेकोपस्थितेः शक्तित एव सम्भवादिति भावः । न तत्पुरुष इति । स्वीक्रियतइति शेषः । वेदानधिकारादिति । स्त्रीशूद्रौ नाधीयातामित्यनेन निषेधादिति भावः । याजनासम्भव इति ।

---

येति ॥ जनकपुंस्त्वावच्छिन्नस्यैव पितृशब्दार्थत्वादिति भावः । गत्यभावादित्यनेन घटादिपदस्थले एकेनैव घटपदेन नानाघटबोधसम्भवात् लक्षणां विनापि तत्सम्भवादिति सूचितम् । आहुरित्यनेनास्मिन् कल्पे अस्वरसः सूचितः। तद्बीजन्तु अस्मृतमातृशब्दस्यापि शाब्दबोधानुभवेन अस्मृतव्यक्तिकल्पने गौरवं भ्रातृपदस्य भ्रातृभगिन्युभयत्र तात्पर्या-

एव कल्पनात् । लाघवेन मुख्यार्थस्यान्वये तदनुपपत्त्या

---

अध्ययनविधिसिद्धज्ञानाभावादिति भावः । तत एवेति । श्रुतिबोधितयाजनानुपपत्त्यैवेत्यर्थः । ननु निषादस्य विद्याकल्पने गौरवमत आह । लाघवेनेति । ननु स्त्रीशूद्रौ नाधीयातामिति श्रुतेरप्रामाण्यापत्तिभिया लाघवमकिञ्चित्करं शूद्रपदस्य निषादेतरशूद्रपरत्वे निषादस्य वेदान्तराध्ययनप्रसङ्गः अध्ययनपदस्य यागोपयुक्ताध्ययनेतराध्ययनपरत्वे च शूद्रान्तरस्यापि यागोपयुक्ताध्ययनप्रसङ्ग इति चेन्न। तत्र विशेषतः प्राप्ताध्ययनेतराध्ययनपरत्वादध्ययनपदस्य, तेन निषादस्य यागोपयुक्ताध्ययनेतराध्ययननिषेधः

---

नुपपत्तेर्लक्षणाबीजत्वादिति भावः। अध्ययनविधिसिद्धेति ॥ अर्थी समर्थो विद्वानित्यादिना यागोपयुक्तद्रव्यवतः शक्तिमतः ज्ञानपदस्य स्वाध्यायो ऽध्येतव्य इति शक्त्या प्रयोजनप्रतीतेर्यजनस्वाध्याययोरेकं कर्तव्यामित्यर्थतया वेदाध्ययनेनैव ज्ञानसम्पादनस्य बोधितत्वात्। उक्तनिषेधप्रतीत्या च निषादस्याध्ययनस्य निषिद्धत्वाद्वेदाध्ययनजन्यज्ञानाभावेन निषादस्य यजनासम्भवः तदसम्भवे तद्याजनस्याप्यसम्भव इति भावः । गौरवं, कल्पनागौरवमित्यर्थः । लाघवमाकिञ्चित्करमिति ॥ लक्षणाकल्पनाप्रयुक्तमित्यर्थः ॥ लाघवं, दोषावहम् इत्यर्थः । उक्तश्रुतेरप्रामाण्यापत्त्या शक्यार्थान्वये लाघवे ऽपि तदादरणीयमिति भावः॥ ननु मा हिंस्यात्सर्वा भूतानीति विधिना हिंसासम्बन्धमात्रस्य निषिद्धत्वे वायव्यं श्वेतमालभेत भूतिकाम इति यागे पशुहिंसाविधानबलाद्विहितहिंसातिरिक्त हिंसानिषेधपरत्वमेव यथोक्तविधेः स्वीक्रियते तथा ऽत्रापि निषादस्थपतिमिति विधानबलात्स्त्रीशूद्रावित्यादिनिषेधवाक्येन शूद्रपदं वा निषादातिरिक्तशूद्रपरम् अङ्गीकरणीयम् । यथाश्रुते ऽप्रामाण्यापत्तेरित्याशङ्कां निराकुते तत्रेति ॥ विशेषतः विशिष्य विधानेन प्राप्तं यदध्ययनं तदतिरिक्ताध्यायनमेव उक्तश्रुतेस्तात्पर्यार्थः । तथा च निषादस्थपतिमिति विधिना प्राप्तनिषादस्य यागोपयुक्तवेदाध्ययनं तदतिरिक्तवेदाध्य-

कल्पनायाः फलमुखगौरवतया ऽदोषत्वादिति । उपकुम्भमर्द्धपिप्पलीत्यादौ परपदे तत्सम्बन्धिनि लक्षणा पूर्वपदार्थप्र-

---

शूद्रान्तरस्य त्वध्ययनमात्रनिषेधः सिध्यतीति । अदोषत्वादिति । ननु लक्षणाकल्पनेपि न दोषः शक्यसम्बन्धरूपलक्षणायाः क्लृप्तत्वात्, न च शाब्दबोधं प्रति लक्षणाज्ञानस्य हेतुत्वकल्पनमाधिकमिति वाच्यम् निषादानां स्थपतिरिति व्युत्पत्त्या निषादसम्बन्ध्यभिन्नस्थपत्यनुभवस्य लौकिकवाक्ये क्लृप्तत्वात् तदनुरोधेन लक्षणाज्ञानहेतुत्वस्य सर्वसिद्धत्वेन वेदेऽधिकस्याकल्पनादिति चेन्न। शक्यसम्बन्धरूपलक्षणाज्ञानस्य शक्तिज्ञानं विना ऽसम्भवेन शक्तिज्ञानस्य तत्रोभयसिद्धतया भवन्मते वैदिकवाक्यजन्यशाब्दबोधात् पूर्वं लक्षणाज्ञानव्यक्तिकल्पनागौरवस्य वज्रलेपत्वादिति । उपकु-

---

यनमात्रं शूद्रमात्रस्य निषिद्धमिति भावः । अदोषत्वादिति ॥ ननु निषादस्थपतिमित्यत्र कर्मधारयोपगमे लाघवं तत्पुरुषोगमे निषादपदस्य निषादसम्बन्धिनि लक्षणायाः कल्पनीयतया गौरवात् । एवञ्च विधितः निषादस्य यजने प्राप्ते तदनुरोधेन निषादस्याध्ययनकल्पने ऽपि, कल्पनागौरवं, फलमुखगौरवस्यादोषत्वादित्युक्तं तदिदमसङ्गतम् । शक्यसम्बन्धरूपलक्षणायाः सर्वसिद्धतया तस्या अकल्पनीयत्वादिति । तत्पुरुषोपगमे ऽपि न किञ्चिद्गौरवम् । अतः कर्मधारयमुपगम्य निषादस्याध्ययनकल्पनमेव गौरवग्रस्तामिति शङ्कते नन्विति ॥ लक्षणायाः क्लृप्तत्वे ऽपि तज्ज्ञानस्य वेदजन्यशाब्दं प्रति हेतुत्वकल्पने गौरवमक्षुण्णमेवेति शङ्कते न चेति ॥ लाक्षणिकशाब्दबोधानुरोधेन लक्षणाज्ञानस्यापि लाक्षणिकार्थविषयकशाब्दबोधम्प्रति हेतुतायाः आक्षिप्ततया तत एव वैदिकशाब्दस्याप्युपपत्त्या वेदस्थले कार्यकारणभावान्तरकल्पनाविरहादिति समाधत्ते निषादानामिति ॥ लक्षणाज्ञानहेतुतायाः आधिक्यविरहे ऽपि वेदजन्यशाब्दबोधव्यक्तीनामपि अव्यवहितपूर्वांशभूतज्ञानव्यक्तीनाम् अज्ञानकल्पनाप्रयुक्तगौरवं वज्रलेपरूपमेवान च तन्मतसिद्धशक्तिज्ञानकल्पनाधिक्यमिति वाच्यम्। शक्यसम्बन्धरूपलक्षणाज्ञाने विशेषणविधया

म्भमर्द्धपिप्पलीत्यादाविति । अत्र कुम्भस्य समीपमित्यस्वपदविग्रहः । अव्ययीभावस्य नित्यसमासत्वात् । पूर्वपदार्थप्रधानतयेति । कुम्भपदलक्षितस्य कुम्भसम्बन्धिन उपपदार्थसमीपे भेदान्वयात् कुम्भसम्बन्ध्याभिन्नसमीपमित्युपपदार्थविशेष्यको ऽन्वयबोध इत्यर्थः । के चित्तु उपपदार्थः सामीप्यं न तु समीपम् समीपे उपपदलक्षणास्वीकारे तु पदद्वयलक्षणापेक्षया कुम्भपदस्यैव कुम्भसमीपे लक्षणा उपपदं तात्पर्यग्राहकं कुम्भसमीपमिति चान्वयबोध इत्याहुः । अत्र यद्यप्यर्द्धपिप्पलीति तत्पुरुषे शक्तिनि-

---

शक्तिज्ञानस्यावश्यकतया शक्तिज्ञानं व्यक्तीनां वेदजन्यशाब्दबोधात्पूर्वम् उभयवादिसिद्धम् अतो ऽशक्यसम्बन्धरूपेति । अस्वपदेति ॥ समस्यमानपदमात्रघटितविग्रहकसमासस्य स्वपदविग्रहस्य समासस्य तादृशविग्रहवाक्यं स्वपदविग्रहवाक्यमित्युच्यते । स एव नित्यसमास इति व्यवह्रियते । स्वपदमात्रघटितविग्रहवाक्यसिद्ध्यर्थमेव वैकल्पिकत्वस्याङ्गीकारात् इति भावः । उपपदार्थविशेष्यक इति ॥ न चैवं कुम्भमुप इत्यादौ व्यक्त्युपादानत्वादौ समीपादेरन्वयो न स्यात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात् उपपदाव्यवहितोत्तरकुम्भपदस्यैव विभक्तिप्रकृतित्वं वाच्यम् । पदभेदेन व्युत्पत्तिभेदस्वीकारात् । पूर्वपदार्थप्रधानस्थले तादृशसमस्तपदविभक्तेरव्यवहितपूर्वापरभावस्यैव तादृशशाब्दबोधनियामकत्वोपगमेन व्युत्पत्तेस्तादृशस्थले सङ्कोचोपगमादिति भावः । कुम्भपदस्यैव कुम्भसमीपे लक्षणा उपपदं तात्पर्यग्राहकम् । एवञ्च प्रत्ययानामपि कुम्भसमीपार्थकत्वेन कुम्भसमीपामित्यन्वयबोधाकारः । किन्तु स्मरणादेवेत्यन्वयबोध इत्यसङ्गतम् । तथाप्यन्वयोत्तरमपीति विभक्तिसत्वेन तदर्थसङ्ख्याप्रकारकतात्पर्येण कुम्भसमीपमिति शाब्दबोध इत्यभिप्रायः । आहुरित्यस्वरसोद्भावनन्तद्वीजन्तु समासान्तर्भावेन क्वाप्युपपदप्रयोगाभावेन उपपदस्य समीपार्थकताया निश्चेतुमशक्यतया स्वपदविग्रहस्थले ऽपि समासार्थकपदान्तरेणैव विग्रहवाक्यस्वीकाराच्च समास पदस्य सामीप्यविशिष्टार्थकतया उपपदस्यापि तदर्थकताया एवोचितत्वात् सम्भवति सार्थकत्वे किञ्चित्पदस्य निरर्थकताकल्पनमयुक्तमिति मन्तव्यम् । शक्ति-

# कारणं सन्निधानं तु पदस्यासत्तिरुच्यते ।

धानतया चान्वयबोध इति. इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहादिति ॥

आसत्तिरित्यादि । आसत्तिज्ञानं योग्यताज्ञानमाका-

---

राकरणं पुनरुक्तं पूर्वं तत्पुरुषे तन्निरासात् तथापि पूर्वमुत्तरपदार्थप्रधानराजपुरुषादौ तन्निराकरणं पूर्वपदलक्षणया इह च पूर्वपदार्थप्रधाने ऽर्धपिप्पलीत्यादितत्पुरुषे उत्तरपदलक्षणया तन्निराकरणमिति भेदादपौनरुक्त्यमिति ध्येयम् । वैयाकरणमतं दूषयति इत्थं चेति । पदशक्त्यैवेति । समासघटकीभूतपदशक्तिलक्षणाभ्यामित्यर्थः ॥

आसत्तिर्योग्यताकाङ्क्षेति मूलादासत्तेः स्वरूपसत्या एव कारणत्वं लभ्यते न तु योग्यताज्ञानादिवदासत्तिज्ञानस्य ज्ञानपदस्य समासघटकत्वेन समासाघटकासत्तिपदार्थेनानन्वयात् स्वरूपसत्याश्चासत्तेः कारणत्वं न सम्भवति गिरिर्भुक्तमित्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमेण शाब्दबोधोदयेन व्यभिचारादतो मूलस्थमासत्तिपदमासत्तिज्ञानपरतया व्याचष्टे । आसत्तिज्ञानमिति । आसत्तियो-

---

निराकरणमिति ॥ यद्यपि राजपुरुष इत्यादौ तत्पुरुषे पूर्वपदस्य लक्षणैव पूर्वं प्रतिपादिता न तु तत्पुरुषे शक्तिर्निराकृता । अर्धपिप्पलीति तत्पुरुषे न पूर्वपदे लक्षणा किन्तूत्तरपदएवेति । इदानीं कः शङ्कावकाशः अग्रे तत्र समासेषु घटकपदानां शक्त्या लक्षणा चैवं तत्तद्विशिष्टबोधोपपत्तौ न क्वापि शक्तिः कल्प्यते गौरवादिति समासमात्रे शक्तिभेद एव निराकरिष्यते । नानुपपत्तिरिति ॥ तथापि तत्पुरुषे पूर्वपदलक्षणाभिधानं समासे शक्तिनिरासायेति तदुक्त्यैव क चि-

ङ्क्षाज्ञानं तात्पर्य्यज्ञानं च शाब्दबोधे कारणम् । यत्पदार्थ-स्य यत्पदार्थेनान्वयो ऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः

---

ग्यतेति विसर्गशून्यपाठस्तु ऋजुरेव । ननु सन्निधानं तु पदस्यासत्तिरुच्यते इति मूलोक्तस्यासत्तिलक्षणस्य गिरिर्भुक्तमित्यत्रातिव्याप्तिः तत्रापि गिरिपदभुक्तपदयोरव्यवधानसत्त्वादतो व्याचष्टे । यत्पदार्थेति । अपेक्षितस्तात्पर्यविषयः । तयोरिति । तयोः पदयोरित्यर्थः । तादृशपदयोरव्य-

---

त्तत्पुरुषे उत्तरपदलक्षणयैव निर्वाहेण तत्रापि न शक्तिकल्पनमिति लाघवसम्भवात् पौनरुक्त्यशङ्कावकाशः कथं चिदुपपादनीयः । विसर्गशून्येति ॥ आसत्तीत्यस्य निर्विभक्तिकत्वे समासान्तर्गतत्वसम्भवेन आसत्त्यादितात्पर्याणां द्वन्द्वसमासमाश्रित्य तेषां ज्ञानमिति षष्ठीतत्पुरुषाश्रयणेन आसत्त्यादिज्ञानसम्भवादिति भावः । सन्निधानं तु पदस्येति मूलकारिकायां चोपपदसान्निध्यमासत्तिरिति यथाश्रुतार्थः प्रतीयते तत्र चोपपदयोः परस्परपदान्वयबोधाजनकत्वे ऽपि सान्निध्यादासत्तिरिति दोषस्य स्पष्टतया तस्यैव ग्रन्थकर्तुः स्वाभिमतासत्तेर्निर्वचनबीजतां प्रदर्शयन्नाह नन्वित्यादि ॥ वस्तुतः सन्निधानमित्यादिमूलं प्राचीनाच्चैव परिशिष्टनियमयोः परस्परमन्वयबोधजनकत्वे तात्पर्यतयोपपदयोरव्यवधानमासत्तिः तस्याः स्वरूपसत्याः शाब्दबोधकारणत्वे गिरिर्भुक्तमित्यादौ गिरिपदाग्निमत्पदयोः अव्यवधानभ्रमाच्छाब्दबोधस्यानुभवसिद्धतया तदपलापापत्तिः तस्माद् भ्रमप्रमासाधारणं तादृशपदयोरव्यवधानज्ञानमेव शाब्दबोधहेतुतयोपगन्तव्यमिति मूलकृदुपन्यस्यति अन्वयप्रतियोगीत्यादि ॥ अन्वयशाब्दबोधविषयीभूततत्प्रतियोग्यनुयोगिबोधकपदइत्यर्थः ॥ मतमेतद्दूषयति वस्तुत इति ॥ अनपेक्षितत्वादिति ॥ शाब्दबोधानुपूर्वीनियमनाभावादित्यर्थः ॥ तथा चोक्ता शक्तिज्ञानस्य हेतुता व्यभिचारेण वक्तुमशक्येति भावः । न चोक्तव्यभिचार एवासिद्ध इति वाच्यम् । पदद्वयेन व्यवधानेन पदार्थता द्वयोरस्तीति ज्ञाने पदाव्यवधानं विनापि शाब्दबोधस्यानुभवसिद्धत्वादिति भा-

कारणम् । तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ न शाब्दबोधः. नीलो घटो द्रव्यं घट इत्यादावासत्तिभ्रमाच्छाब्दबोधः । आसत्तिभ्रमेण शाब्दभ्रमाभावे ऽपि न क्षतिः । ननु

---

वधानमासत्तिस्तदुपस्थितिः कारणमित्यर्थः । तथा च गिरिपदार्थभुक्तपदार्थयोरन्वयो न तात्पर्यविषयो ऽपि तु गिरिपदार्थाग्निमत्पदार्थयोरेवेति तयोरव्यवधानाभावान्नातिव्याप्तिरिति भावः । तेन, एतादृशयत्तत्पदगर्भासत्तिनिर्वचनेन । ननु नीलो घटो द्रव्यं घट इत्यत्र नीलपदार्थपटपदार्थयोर्यत्रान्वयो वक्तुस्तात्पर्यविषयो न तु नीलपदार्थघटपदार्थयोस्तत्र नीलपदघटपदयोरासत्तिर्न स्यात् तत्तदर्थान्वयस्य तात्पर्यविषयत्वाभावात् अतस्तत्रेष्टापत्तिमाह । नीलो घट इत्यादिना । तर्हि तत्र नीलो घट इति कथं शाब्दबोध इत्यत आह । भ्रमाच्छाब्दबोध इति । तथा च भ्रमाच्छाब्दबोधमात्रं न तु तत्रासत्तिरिति भावः । ननु तत्र यद्यासत्तिभ्रमस्तदा शाब्दबोधो भ्रमात्मकः स्यात् न चेष्टापत्तिः घटे नीलस्य सत्त्वेन विषयबाधाभावादासत्तिभ्रमाच्छाब्दभ्रमाङ्गीकारे चासत्तिभ्रमाच्छाब्दभ्रम इति प्राचीनगाथाविरोध इत्यत आह । आसत्तिभ्रमेणेति । न क्षतिरिति । आसत्तिभ्र-

---

वः । यत्पदार्थेनेत्यादितात्पर्यविषय इति ॥ तात्पर्यविषयत्वानिश्चय इत्यर्थः । तादृशपदयोरिति ॥ तादृशपदज्ञानयोरित्यर्थः ॥ तदुपस्थितिरिति तेनोपस्थितिः तदुपस्थितिरिति व्युत्पत्त्या तादृशासत्तिविशिष्टपदजन्योपस्थितिरित्यर्थः । अनपेक्षत्वादिति पूर्वमूलविरोधापत्तेः उक्तपदद्वयोपस्थित्योरव्यवधानमेवासत्तिः । सा च स्वरूपसत्येव शाब्दबोधकारणं नातः पूर्वमूलविरोधः । अत एवासत्तिर्योग्यतेति मूलकारिकायाम् आसत्तेरसमासान्तत्वेन निर्देशो ऽपि साधु सङ्गच्छते । तस्याः स्वरूपसत्या एव शाब्दबोधकारणत्वात् । न चैवमप्यासत्तिभ्रमाच्छाब्दबोधकारणत्वात् इति वाच्यम् । आसत्तिभ्रमादित्यस्य भ्रमनिर्वाह्य-

यत्र छत्री कुण्डली वासस्वी देवदत्त इत्युक्तं तत्रोत्तरपदस्म-
रणेन पूर्व्वपदस्मरणस्य नाशादव्यवधानेन तत्तत्पदस्मर-
णाऽसम्भव इति चेन्न । प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य
तावत्पदविषयकस्मरणस्याऽव्यवधानेनोत्पत्तेः। नानासान्निक-

---

मस्य न शाब्दभ्रमप्रयोजकत्वं किं तु योग्यताभ्रमस्य । आसत्तिभ्रमाच्छाब्द-
भ्रम इति प्राचीनगाथा तु निर्युक्तिकत्वादश्रद्धेयेति भावः । क्व चित्पुस्तके
न शाब्दबोध इत्यनन्तरं नीलो घट इत्यतः पूर्वं तात्पर्यगर्भासत्तिरिति पाठः
स च यत इत्यादिपूरणेन यतस्तात्पर्यगर्भात् तात्पर्यविषयीभूतान्वयबोध-
कपदान्वयरूपा पूर्वनिरुक्तासत्तिरतो न शाब्दबोध इत्यर्थकतया व्याख्ये-
यः पाठान्तरं काल्पनिकामिति । न चोक्तार्था आसत्तेः श्लोके ऽभावा-
द्विशेषदर्शनेन पदाव्यवधानभ्रमस्यापि तत्राभावाच्छाब्दबोधो न स्यादिति
वाच्यम् श्लोकादौ योजनावाक्यादेवान्वयबोधोपगमात् । नव्यास्तु उक्ता-

---

सत्तेरित्यर्थः । त्वदुक्तासत्तेरतात्पर्यनिश्चयघटितत्वेन नीलघटपदार्थयोरन्वये ता-
त्पर्यविरहेण तात्पर्यभ्रमेणैव तत्रासत्तेर्निर्वाह्यत्वादिति ध्येयम् । भ्रमादिति ॥ भ्र-
मनिर्वाह्यासत्तिरित्यर्थः । ययोः पदयोः परस्परान्वयबोधजनकत्वेन वक्तुस्तात्प-
र्यविषयत्वनिश्चयः तयोरव्यधानस्यैवासात्तितया तादृशतात्पर्यविषयकानिश्चयस्य भ्र-
मरूपत्वादित्यवधेयम् । एवञ्चासत्तिभ्रमाच्छाब्दभ्रमाभावे ऽपीत्याग्रिममूले ऽपि प्रमाण-
प्रयोगआसत्तेः शाब्दभ्रमाभावे ऽपीत्यर्थो वर्णनीयः ॥ नातः पूर्वोत्तरमूलग्रन्थसन्दर्भ-
विरोधः । प्रमया आत्मा स्वरूपं यस्येति व्युत्पत्या प्रमाप्रयुक्तशाब्दबोधस्येत्य-
र्थः । इत्थञ्च भाववर्णनमेव प्रकृतग्रन्थे तयोरभावात् तथा च भ्रमप्रयुक्तासत्ते-
रेव तत्र शाब्दबोधः न तु प्रमाप्रयुक्तासत्तेरपीति ग्रन्थतात्पर्यमिति भावः । श्लोके
इति ॥ तत्र क्रियाकारकपदयोः पदान्तरेण व्यवधाने ऽपि शाब्दबोधस्यानुभव-
सिद्धत्वादिति भावः । पदाव्यवधानेपि ॥ इदं चैतदनुपदस्यैवासत्तिज्ञानमेव शाब्दबो-

सत्तिर्मौनिश्लोके न सम्भवति तत्र पदाभावेन पदाव्यवधानासम्भवात् उक्तासत्तिज्ञानविलम्बेन शाब्दबोधविलम्बाभावाच्च किन्त्वव्यवधानेन वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिस्तत्राप्यव्यवधानांशो न निवेश्यते शाब्दबोधं प्रति पदजन्यपदार्थोपस्थितेः कारणतया ऽव्यवधानेनैव तत्सम्भवात् । तस्माद् वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिरित्याहुः । नन्वव्यवधानेन पदोपस्थितिः शाब्दबोधे कारणमित्ययुक्तम् अनेकपदघटितवाक्यस्थले ऽव्यवधानेन पदोपस्थित्यसम्भवादित्याशङ्कते । नन्विति । अव्यवधानेनोपपत्तेरिति । भेदेप्यव्यवधानसम्भवादिति भावः । ननु तद्विशेष्यकतत्प्रकारकस्मृतिं प्रति तद्विशेष्यकतत्प्रकारकसंस्कारत्वेन जनकत्वात् कथं प्रत्येकपदसंस्कारैर्नानापदविशेष्यकस्मरणं भिन्नविषयकत्वादत आह । ना-

---

धकारणत्वमङ्गीकरिष्यामः । न तु स्वरूपसत्या आसत्तेरिति निरासायैवेत्युक्तन्तेन शुद्धकृतस्वरूपसत्यासत्तेः कारणत्वोपगमेनैव ग्रन्थासङ्गतिरित्यवधेयम् । योजनावाक्यादिति ॥ शाब्दबोधोपपत्तये अव्यवहितोत्तरक्रियाकारकपदादेवेत्यन्वयः । अव्यवधानासम्भवादिति ॥ पदजन्योपस्थितिरूपे अव्यवहितप्राक्क्षणे एकोपस्थितिव्यक्तिनाश्यतया उपस्थितिरूपायाः शाब्दबोधात्प्राक् आसत्या एव घटकत्वादिति भावः । आहुरित्यनेन नव्यमते ऽस्वरसः सूचितः तद्बीजं तु एवं सति पदजन्योपस्थितेः कारणत्वएव पर्यवसानादासत्तेः शाब्दकारणतया स्वरूपसिद्धाया विलयप्रसङ्ग इति ॥ न च मौनिश्लोकादौ पदाभावाभात्कथमासत्तिरिति वाच्यम् । पदाभावे ऽप्यानुमानिकपदज्ञानस्यावश्यकत्वात् । अन्यथा पदज्ञानरूपकारणाऽभावेन मौनिश्लोकादौ शाब्दबोधस्यैवानुपपत्तेः । एवञ्च ययोः पदयोरन्वयबोधजनकत्वे मौनिनस्तात्पर्यमुपगम्यते तयोरव्यवधानेनानुमानिकज्ञानं वर्ततएवेति न ग्रन्थकृन्मते शाब्दबोधानुपपत्तिरिति विभावनीयम् । भेदइति ॥ तत्तत्स्मरणव्यक्तीनां भेदइत्यर्थः । तथा च तत्तत्पदविषयकसमूहालम्बनमेकमेव स्मरणं भवति तत्र समूहालम्बनपदार्थस्मृतेस्स्वतन्त्रशाब्दबोध इति भावः । तद्विशेष्यकेत्यादि ॥ तत्तद्विशेष्यकतत्तत्प्रकारकस्मरणं प्रति तत्तद्विशेष्यकतत्तत्प्रकारकसंस्कारस्यैव हेतुतया प्रत्येक-

यैरेकप्रत्यक्षस्येव नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात् । तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात् । कथमन्यथा नानावर्णकपदस्मरणम्. परं तु तावत्पदार्थानां स्मरणादेकदैव खले कपोतन्यायात् तावत्पदार्थानां क्रियाक-

---

नासन्निकर्षैरिति । सम्भवादिति । तथा च यथा घटचक्षुःसंयोगस्य घटप्रत्यक्षांशे कारणत्वाभावेपि घटचक्षुःसंयोगपटचक्षुःसंयोगाभ्यामेकं प्रत्यक्षं तथा तत्तत्पदगोचरसंस्कारस्य भिन्नविषयकत्वांशे ऽजनकत्वेपि तत्तत्संस्कारजन्यस्मरणमेकमेव जायते बाधकाभावादिति भावः। अन्यथा, नानासंस्काराणामेकस्मरणजनकत्वाभावे । नानावर्णैरिति । नानावर्णानां प्रत्येकसंस्कारैरित्यर्थः । एकस्मरणं नानावर्णगोचरमेकस्मरणं पदस्मरणवदाशुतरविनाशिनां क्रमिकाणां पदजन्यपदार्थोपस्थितीनामपि मेलनासम्भवात् सर्वत्र शाब्दबोधे पदजन्यपदार्थोस्थितिः समूहालम्बनात्मिकैव कारणम् एवं च सर्वत्र युगपदेव सकलपदार्थानां विशेष्ये विशेषणमिति न्यायेनैव शाब्दबोधो न तु विशिष्टस्य वैशिष्ट्यमिति रीत्या तज्जनकाविशेषणतावच्छेदकप्रकारकनिर्णयस्य पूर्वमभावादिति । प्राचीनमतं दर्शयति परं त्वित्यादिना । एकदैवेति । ननु घटमानयेत्यादौ प्रथमं घटीया कर्मतेत्येवं

---

पदविषयकसंस्कारात् कथं नानापदविषयकस्मरणोत्पत्तिः समानविशेष्यकत्वसमानप्रकारकत्वाभ्याम् एकस्मृतिसंस्कारयोः कार्यकारणभावादित्यभिमानः । यथाश्रुतं न सङ्गच्छते । यद्यद्विशेष्यकयद्यत्प्रकारकस्मरणं तत्तद्विशेष्यकतत्तत्प्रकारकसंस्कारव्यक्तीनां सत्त्वेनानुपपत्त्यभावात् । सिद्धान्ते तु तद्विशेष्यकतत्प्रकारकसंस्कारत्वेनैव हेतुता पदार्थविशेष्यकस्मरणे तु पदार्थविशेष्यक एव संस्कारो हेतुरिति नानासंस्कारैस्समूहालम्बनैकस्मरणस्य नानुपपत्तिरिति हृदयम् । बाधकाभावादिति ॥ तत्तत्संस्कारजन्यकार्यैकस्मरणस्यैकव्यक्तित्वादिति भावः । नानाव-

र्म्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित्। "वृद्धा युवानः शिशवः कपोताः खले यथा ऽमी युगपत् पतन्ति। तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति"। अपरे तु "यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन

---

बोधस्तदन्तरं च घटकर्मकानयनेत्यादिबोध इत्यादिक्रमेणेत्यर्थः । वृद्धा युवान इत्यस्य तदाहुरित्यादिः । अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यम् । केचिदित्यनेन सूचितमस्वरसं प्रकाशयन् मतान्तरमाह । अपरे त्विति । यद्यदिति । स्वार्थाकाङ्

---

र्णगोचरेति ॥ वर्णसमुदायस्यैव पदरूपत्वेन एतादृशपदस्मरणस्य वर्णसमुदायविषयकानुभवाभावेन तत्तद्विषयकसंस्काराभावात् प्रत्येकवर्णविषयकसंस्कारैरेव समूहालम्बनतावद्वर्णविषयकपदस्मरणस्योपगन्तव्यत्वात् इति भावः । इदमत्रावधेयम् । यद्यपि संसर्गप्रतियोग्यनुयोगिबोधकपदज्ञानयोरव्यवधानरूपासत्तेः शाब्दबोधजनकत्वकल्पने प्रयोजनविरहः । स्वजन्यपदार्थोपस्थितिद्वारा पदद्वयज्ञानसत्त्वात् शाब्दबोधोत्पत्तिसम्भवे । व्यवहितपदज्ञानप्रकारकशाब्दबोधप्राक्क्षणोत्पत्त्यसम्भवेनैव व्यवहितपदज्ञानाभ्यां शाब्दबोधोपपादनसम्भवात् । अव्यवहितपूर्वत्वस्यासत्तित्वे ऽपि अन्यथासिद्धत्वकल्पने प्रयोजनाभावात् । तथापि यत्र प्रथमं घटपदज्ञानं ततः पटपदज्ञानं तदुत्तरक्षणेषु घटपदज्ञानजन्यघटपदार्थमनुविषयिणी उद्बोधकान्तरविरहेण शक्तिविषयिणी वा समूहालम्बनस्मृतिः शून्यरूपार्थस्मरणं तत्र न शाब्दबोध इति शाब्दबोधापत्तिवारणाय उक्तासत्तेः शाब्दबोधे हेतुत्वकल्पनस्यावश्यकत्वान्न दोषः । परं त्वित्यादिग्रन्थमवतारयति आशुतरविनाशशालिनामित्यादि ॥ केचित्यदिनन्तरं वृद्धा युवान इत्यादिश्लोकस्य मूले पाठात् तत्रान्वयानुपपत्तिं मन्यमानः पूरयति तदाहुरित्यादीति ॥ चिरेति ॥ अप्रथमोक्तपदार्थस्य वृद्धसाम्याद् द्वितीयोक्तस्य युवसाम्यं सन्निहितोक्तस्य शिशुसाम्यमिति भावः । स्वार्थेत्यादि ॥

क्षितं स्वार्थयोग्यं यद्यत्सान्निधानं प्रपद्यते स्वार्थोपस्थितिविषयो भवति तेन तेनैवान्वितः स्वार्थः पदैः प्रथममनुभाव्यते ऽनन्तरं च महावाक्यार्थबोध इत्यर्थः । एवं च पूर्वोक्तसमूहालम्बनात्मकं पदार्थस्मरणं विनापि निर्वाह इति भावः । न च घटमानयेत्यादौ चरमपदार्थस्मृतिकाले घटादिपदार्थ-स्मृतेर्नाशात् समूहालम्बनस्मृतिरावश्यकीति वाच्यम् । तत्र घटस्मरणनाशेपि घटीया कर्मतेत्याकारकावान्तरबोधस्यैव पदजन्यपदार्थोपस्थितित्वेन तेनैव घटकर्मकानयेत्यादिमहावाक्यार्थबोधनिर्वाहात् । नहि पदजन्यपदार्थस्मृतित्वे-न शाब्दबोधं प्रति हेतुत्वमपि तु शाब्दबोधसाधारणतादृशोपस्थितित्वेनैवे-ति । एवं चैतन्मते खण्डवाक्यार्थबोधपूर्वक एव महावाक्यार्थबोधः । अत एव सर्वत्र खण्डवाक्यार्थबोधरूपस्य विशेषणतावच्छेदकप्रकारकनिश्चयस्य

---

स्वं घटादिपदं तस्यार्थो घटादिः तेनाकाङ्क्षितं तदुपस्थितिजन्यं किं घटीयमिति जि-ज्ञासाविषयीभूतं योग्यताज्ञानाधीनं, कर्मत्वादि सन्निधानं घटरूपार्थविषयकस-मूहालम्बनस्मृतिविषयकत्वं प्रपद्यते तेन कर्मत्वादिना ऽअन्वितो यः स्वार्थो घटादि-पदैरेवावगम्यते तज्जन्यशाब्दबोधविषयो भवतीति कारिकार्थ इति भावः । प्र-थममित्यनेन आनयनरूपार्थोपस्थितिः पूर्वमेव घटमिति घटीयकर्मतेति शाब्दबोधो भवतीति सूचितम् । अनन्तरं चेति ॥ खण्डवाक्यार्थविषयकशाब्दबोधानन्तरमे-व बोधो भवतीति ध्येयम् । मूले तयैव पदार्थस्मृत्येत्यस्य पदज्ञानजन्यानयनादि-पदार्थस्मृत्यैवेत्यर्थः । प्राचीनमते अस्वरप्रकाशनं प्रकटयति एवञ्चेति ॥ चरम-पदार्थेति ॥ आनयनादिरूपपदार्थस्मृतिकाले इत्यर्थः । नाशादिति ॥ घटकर्म-त्वयोरुपस्थित्यनन्तरं घटीया कर्मतेति खण्डवाक्यार्थः । तदनन्तरमानयनादिप-दज्ञानं तदनन्तरं पदार्थस्मरणमित्येवानयनसरूपार्थस्मृत्या तत्काले पूर्वतनघटाद्युप-स्थितेर्नाशात् इत्यर्थः । पदार्थोपस्थितित्वेनेति ॥ पदार्थज्ञानत्वेनेत्यर्थः ॥ खण्ड-वाक्यार्थशाब्दबोधस्यापि पदजन्यत्वादिति भावः । न हि पदजन्यपदार्थस्मृति-त्वेनेति पाठे ऽप्युपस्थितिस्मृत्यर्थमेव शाब्दसाधारणेति । खण्डवाक्यार्थविषय-कशाब्दबोधानुगमतेरित्यर्थः । तादृशोपस्थितित्वनैव पदजन्यज्ञानत्वम् । तथा च

